न चैतादृशतर्कावतारो भूयोदर्शनं विनेति भूयोदर्शनादरः, न तु स स्वत एव प्रयोजकः । अत एव तदाहितसंस्कारो न मानान्तरं, तर्कस्याप्रमात्वात् ।

---

धप्रतियोगिनो यदा कदा चित् यत्र कुत्रचित् सत्वमात्रमपेक्षितं न तु तदा तत्र(तद्धुचरं) तत्सत्त्वमिति विभाव्यते तदा तुल्यं प्रकृतेऽपीति भावः ।

नन्वेवं व्याप्तिज्ञानं भूयोदर्शनादिति सिद्धान्तः कथं संगच्छत इत्यपेक्षायामाह—*न चेति* । वह्निधूमयोर्भूयः सहचारनिश्चयं विना धूमे वह्न्यसमवहितसामग्र्यजन्यत्वनिश्चयासम्भवात् । अयमेव धूमो वह्निपूर्वक एतदन्यस्तु न; एवमेतद्धूमद्वयमेव वह्निपूर्वकं नत्वेतदन्य इत्यादिशङ्कासम्भवादिति भावः । भूयोदर्शनादरः=कदाचित्कुत्रचित्तदुपयोगः । *न त्विति* । सः= भूयः सहचारग्रहः, स्वत एव = साक्षादेव । *प्रयोजक इति* । व्याप्तिग्रहप्रयोजक इत्यर्थः । भूयोदर्शनस्य संस्कारद्वारा व्याप्तिग्राहकत्वे तदाहितसंस्कारस्य मानान्तरत्वापत्तिः, यदसाधारणं सहकार्यासाद्य मनो वह्निर्गोचरां प्रमां जनयति तदेव प्रमाणान्तरमिति पूर्वपक्षोक्तं दूषयति— *अतएवेति* । यत एव भूयोदर्शनजन्यसंस्कारस्तर्क एव प्रयोजको न तु व्याप्तिग्रहेऽत एवेत्यर्थः । *अप्रमात्वादिति* ।

---

तर्केणैव यदि व्याप्तिग्रहः स्यात्तर्हि भूयो दर्शनाद् व्याप्तिग्रहो भवतीति प्राचीनसिद्धान्तव्याघातः स्यादतः भूयो दर्शनेन तर्कावतारस्ततो व्याप्तिग्रह इति परम्परया भूयोदर्शनस्य व्याप्तिग्रहहेतुत्वव्यवस्थापकं न चैतादृशेतिमूलं नन्वित्यादिना अवतार्य भूयोदर्शनस्य तर्कप्रयोजकत्वं प्रदर्शयति—वह्निधूमयोरित्यादि । भूयः=वारम्वारं । सहचारनिश्चयं विना=सामानाधिकरण्यप्रत्यक्षनिश्चयं विना । धूम इति । तथा च धूमे सत्यन्तदलनिश्चयं प्रति निरुक्तभूयोदर्शनस्य हेतुत्वे तर्क प्रत्यपि तस्य हेतुत्वमिति भावः । न केवलं भूयोदर्शनस्य तादृशनिश्चयसंपादकत्वेनैव हेतुत्वमपि तु तर्कविरोधिशङ्काविघटकत्वेनापीत्याह—अयमेवेति । तथा च युक्तशङ्का स्यात् तदा वह्निप्रभवहितजन्यत्वनिश्चय एव न स्यादित्याशयः । यत्र तादृशशङ्कासंभवस्तत्रैव भूयोदर्शनादर इत्याह—कदाचिदिति । भूयो दर्शनस्य साक्षाद्व्याप्तिग्रहे प्रयोजकत्वन्तु नास्ति, अपि तु तर्कप्रयोजकत्वेनैव कदाचित्तस्य व्याप्तिग्रहप्रयोजकत्वमित्याह—साक्षादेवेत्यादि । भूयोदर्शनस्य = भूयः सहचारप्रत्यक्षस्य । व्याप्तिग्राहकत्वे = व्याप्तिग्रहजनकत्वे । तदाहितेति । भूयोदर्शनजन्यसंस्कारस्येत्यर्थः । यदसाधारणेति । (यद्वाह्यार्थविशेष्यकयत्प्रकारकप्रत्यक्षप्रमितेर्मनोऽन्यासाधारणकारणं यद् भवति तत् सर्वं मानसान्यप्रमायाः करणं भवतीत्यर्थः) पूर्वपक्षोक्तं = परामर्शपूर्वपक्षोक्तम् । न तु व्याप्तिग्रह इति । व्याप्तिग्रहे यदि भूयोदर्शनजन्यसंस्कारो हेतुः स्यात् तदा तस्य मानसान्यप्रमायाः करणत्वं स्यादित्याशयः । ननु भूयोदर्शनजन्यसंस्कारो यदि तर्कजनकः स्यात्तदापि संस्कारस्य प्रमाणान्तरत्वापत्तिरित्याह मूले—तर्कस्येति । अप्रमात्वादितीति । तथा च तर्कस्याऽप्रमात्वेन भूयोदर्शनजन्यसंस्कारस्य प्रमाकरणत्वं न-

तच्च प्रत्यक्षव्याप्तिज्ञाने हेतुस्तदभावेऽपि शब्दानुमानाभ्यां तद्ग्रहात् । ननु सहचारदर्शनव्यभिचारादर्शनवद्व्यभिचारशङ्काविरहानुकूलतर्कयोर्ज्ञानं व्यभिचारिसाधारणमिति न ततोऽपि व्याप्तिनिश्चय इति चेत्—न; स्वरूपसतोरेव तयोर्व्याप्तिग्राहकत्वात् ।

इदमापाततः, तर्कस्याप्यंशतः प्रमात्वात् । वस्तुतस्तर्कस्य प्रमात्वेऽपि तं प्रति संस्कारो न जनकः किन्तु प्रयोजक एवेति न प्रमाणान्तरत्वमित्येव तत्त्वम् । *तच्चेति* । व्यभिचारसन्देहाभाववत्त्वञ्चेत्यर्थः । तदभावेऽपि=व्यभिचारसन्देहाभावाभावेऽपि व्यभिचारसन्देहेपीति यावत् । व्यभिचारसन्देहस्य योग्यतादिसन्देहरूपतया शब्दादिना अर्थनिर्णयऽविरोधित्वादिति भावः ।

भ्रान्तो देशयति—*नन्विति* । *व्यभिचारादर्शनवदिति* । व्यभिचारनिर्णयाभाववदित्यर्थः । यथा व्यभिचारनिश्चयाभावसहचारदर्शनं न व्याप्तिग्राहकम्, अन्यथा यत्र व्यभिचारसंशयो वर्तते तत्र व्याप्तिग्रहापत्तेः, तत्रापि व्यभिचारनिश्चयाभावसहचारदर्शनयोः सत्त्वात्, तथा व्यभिचारसंशयाभावतर्कयोर्ज्ञानं न व्याप्तिग्राहकं, शङ्कासत्त्वदशायामपि व्यभिचारशङ्काविरहानुकूलतर्कयोर्ज्ञानसम्भवात् तत्र व्याप्तिग्रहापत्तेरिति । *व्यभिचारीति* । सन्दिग्धव्यभिचारीत्यर्थः । व्याप्तिग्राहकत्वात्=व्याप्तिग्रहे संभवतीति हृदयम् । टीकायामाक्षिपति—इदमापातत इति । अंशतः प्रमात्वादिति । तथा च यथाश्रुतमूलेन तादृशसंस्कारस्य प्रमाणान्तरत्वाभावो न घटत इति भावः । तर्कस्यांशतः प्रमात्वेऽपि स्वयं तादृशसंस्कारस्य प्रमात्वं खण्डयति—वस्तुत इति । तं प्रति=तर्कं प्रति । न जनक इत्यनेन तादृशासाधारणजनकत्वस्यैव प्रमाणान्तरत्वप्रयोजकत्वमभिहितम् । न प्रमाणान्तरत्वमिति । तादृशसंस्कारस्य तर्कजनकत्वाभावेनेत्यादिः ।

'तच्चे'तिमूलघटकं तत्पदं तात्पर्यवशाद्व्याप्तिग्रहोपायोक्तं व्यभिचारसन्देहाभावपरमित्याह—व्यभिचारेति । प्रत्यक्षात्मकव्याप्तिज्ञान एव व्यभिचारसन्देहाभावो हेतुः, न तु शाब्दात्मकव्याप्तिज्ञान इत्याह—व्यभिचारसन्देहेति । व्यभिचारसन्देहसत्त्व इत्यर्थः । ननु व्यभिचारसन्देहः कथं न शाब्दात्मकव्याप्तिज्ञाने प्रतिबन्धक इत्यतो भावमाह—योग्यतादीति । तथा च शब्दादिना व्याप्तिनिश्चये व्यभिचारसन्देहस्य योग्यतासन्देहस्वरूपतया योग्यताज्ञानत्वेन तस्य जनकत्वमेव, न तु प्रतिबन्धकत्वमित्याशयः । व्यभिचारसन्देहाभावतर्कयोर्ज्ञानमेव व्याप्तिग्रहे जनकं न तु व्यभिचारसन्देहाभावतर्कौ जनकाविति भ्रमं निराकुर्वतो मूलकारस्य नन्वित्याद्याशङ्कां निराकरोति—यथेत्यादि । व्यभिचारनिश्चयाभावस्य व्याप्तिग्राहकत्वे दोषमाह—यत्र व्यभिचारेति । व्यभिचारसंशयाभावतर्कयोर्ज्ञानं यदि व्याप्तिग्राहकं तदा व्यभिचारशङ्कादशायामपि व्यभिचारशङ्काभावतर्कज्ञानसंभवाद्व्याप्तिज्ञानापत्तिः स्यादतो तादृशज्ञानं न व्याप्तिज्ञानजनकमित्याह—तथा व्यभिचारेति । मूले स्वरूपसतोरेवेति । अज्ञायमानयोरेव व्यभिचारसन्देहाभावतर्कयोर्व्याप्तिग्राहकत्वमिति भावः । व्यभिचारसन्देहाभावतर्कयोः साक्षाद्व्याप्तिग्रहजनकत्वाऽसंभवाद् व्याप्तिग्राहकत्वादिति मूलं व्याचष्टे टीकायां—व्याप्तिग्रहे प्रयोजकत्वादिति ।

सत्तर्काद् व्याप्तिप्रमा,

प्रयोजकत्वात् । ननु तथापि व्यभिचारज्ञानविरहानुकूलतर्कयो र्व्यभिचारिण्यपि सत्त्वात्कथं प्रमाभ्रमविभाग इत्यत आह—*सत्तर्कादिति* ।

यद्यपि तर्कस्य सत्त्वं मूलशैथिल्यादिदोषरहितत्वं, तद्विशिष्टत्वमेव भ्रमत्वं, तच्च न प्रामाण्याप्रामाण्यप्रयोजकं, वस्तुगत्या व्याप्तिसत्त्वे तादृशदोषविशिष्टाद् धूमो यदि वह्निव्यभिचारी स्यात् पृथिवी न स्यादित्यादितर्कादपि प्रमाभ्रमयोरुत्पादानुत्पादाभ्यां व्यभिचारात् । एवं विशेषदर्शने सत्यत्वासत्यत्वमपि न प्रामाण्यादिप्रयोजकं विषयस्याबाधितत्वेऽसत्यादपि विशेषदर्शनात् प्रमाभ्रमयोरुत्पादानुत्पादाभ्यां व्यभिचारात् ।

न च तर्कस्य सत्त्वं वस्तुगत्या व्याप्तिमद्विषयकत्वम्, आभासत्वञ्च-

नन्विति । तथापि = व्यभिचारज्ञानाभावानुकूलतर्कयो र्व्याप्तिग्राहकत्वेऽपि । व्यभिचारिण्यपीति । कदाचिद् भ्रान्तस्येत्यादिः । सत्त्वादिति । व्यभिचारज्ञानविरहानुकूलतर्कयोरितिपूर्वेणान्वयः । कथं प्रमाभ्रमविभाग इति । तथा च व्यभिचारिण्यपि हेतौ तादृशकारणसमवधानाद्व्याप्तिग्रहोत्पत्तौ कुत्र व्याप्तिग्रहस्य प्रमात्वं भ्रमत्वञ्चेति विभागो न स्यादिति भावः । शङ्कते—यद्यपीति । मूलशैथिल्येति । व्यभिचारादिदोषरहितत्वमित्यर्थः । आदिना पक्षे आपाद्यसत्त्वादिपरिग्रहः । तद्विशिष्टेति । व्यभिचारादिविशिष्टत्वमेवेत्यर्थः । एवकाराद्बाधादेर्दोषत्वव्यवच्छेदः । भ्रमत्वमिति । तर्कस्येतिपूर्वेणान्वयः । तच्चेति । तादृशदोषरहितत्वं तादृशदोषवत्त्वञ्चेत्यर्थः । न प्रामाण्येति । यथाक्रमं तादृशदोषराहित्यं प्रमात्वप्रयोजकं, तादृशदोषवत्त्वञ्चाऽप्रमात्वप्रयोजकं नेति पर्यवसितार्थः । तत्र हेतुमाह—वस्तुगत्येति । वास्तविकव्याप्तिसत्त्व इत्यर्थः । तादृशेति । व्यभिचारादिदोषविशिष्टादित्यर्थः । तर्कादितिपरेणान्वयः । वह्निव्यभिचारित्वस्य घटपटादौ सत्त्वेन तत्र पृथिवीत्वाभावरूपापाद्यविरहादुक्ततर्कस्य व्यभिचारादिदोषवत्त्वेन भ्रमत्वं, दोषवत्त्वञ्च तादृशदोषवदापादकत्वं बोध्यम् । तथा चोक्ततर्कस्य भ्रमत्वेऽपि ततः प्रमात्मकव्याप्तिज्ञानोत्पादाद्व्यभिचारः, अप्रमात्ववद्व्याप्तिज्ञानानुत्पादाच्च व्यभिचार इति तादृशदोषराहित्यमपि न व्याप्तिप्रमाप्रयोजकं, न वा तादृशदोषवत्त्वमपि व्याप्तिभ्रमोत्पादप्रयोजकमित्याशयः । एवमिति । विशेषदर्शने = विरोधिव्याप्यदर्शने । सत्यत्वेति । दोषराहित्यं दोषवत्त्वञ्चेत्यर्थः । न प्रामाण्येति । सत्यत्वं=प्रामात्मकपुरुषज्ञानप्रयोजकम्, असत्यत्वं=भ्रमात्मकपुरुषज्ञानप्रयोजकं नेत्यर्थः । कथन्तानिवृत्त्यर्थमाह—विषयस्येति । विशेष्यीभूतवस्तुन इत्यर्थः । अबाधितत्वे=पुरुषत्वावभाववत्तयाऽनिश्चितत्वे । असत्यादपि= व्यभिचारादिदोषयुक्तादपि । विशेषदर्शनाद्=विरोधीभूतस्य व्याप्यदर्शनात् । प्रमाभ्रमयोरित्यादि । असत्याद्विशेषदर्शनात्प्रमात्मकपुरुषज्ञानस्योत्पादेन भ्रमात्मकपुरुषज्ञानस्यानुत्पादेन च व्यभिचारादित्यर्थः । तथा दोषयुक्तं विशेषदर्शनं न भ्रमात्मकपुरुषज्ञानप्रयोजकं, न वा प्रमात्मकपुरुषज्ञानाऽप्रयोजकमिति भावः ।

यद्यपि तर्कनिष्ठं सत्यत्वं वास्तविकव्याप्तिमदापादकत्वं, तन्निष्ठाभासत्वञ्च वास्तविकव्याप्यमाववदापादकत्वम्, विशेषदर्शननिष्ठसत्यत्वमपि वास्तविकपुरुषत्ववद्विषयकत्वं,

तदाभासात्तदप्रमा विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव ।

वस्तुगत्या व्याप्त्यभाववद्विषयकत्वम्, एवं विशेषदर्शनस्य सत्यत्वं वस्तुगत्या पुरुषत्ववद्विषयकत्वम्, वस्तुगत्या तदभाववद्विषयकत्वञ्चासत्यत्वमिति वाच्यम्; तस्यापि स्वतः सिद्धशङ्काविरहस्थले तर्कं विनैव व्याप्तिग्रहेण व्यभिचारात् तस्य प्रमाभ्रमप्रयोजकत्वासम्भवात् ।

तथापि सत्तर्कात्=सत्यव्याप्तिज्ञानात्, तदाभासात्=तदऽभावात् । तथा च व्याप्तिप्रमात्वावच्छिन्नं प्रति व्याप्तिप्रमात्वेन हेतुत्वम्, समानविशेष्यत्वंप्रत्यासत्तिः । व्याप्तिभ्रमत्वावच्छिन्नं प्रति विशेष्यत्वसम्बन्धावच्छिन्नव्याप्तिप्रमाविरहत्वेन हेतुत्वम् । विशेषणताविशेषविशेष्यताभ्यां सामानाधिकरण्यं प्रत्यासत्तिः । सर्वत्रान्ततो भगवद्व्याप्तिप्रमैव पूर्वं सुलभेति भावः । विशेषदर्शनसत्यत्वासत्यत्वाभ्यां=सत्यविशेषणज्ञानतद् विरहाभ्यां पुरुषत्वप्रमातद्विरहाभ्यामिति यावत् । पुरुषज्ञानमिव=पुरुषत्वप्रमाभ्रम इव । तर्कस्य शङ्कामात्रनिवर्तकत्वात्, यत्र स्वतः सिद्धः शङ्काविरहस्तत्र तर्कं विनैव व्याप्तिग्रह इति नानवस्थेति

---

तन्निष्ठासत्यत्वञ्च वास्तविकपुरुषत्वाभाववद्विषयकत्वमित्युच्यते, तथापि व्यभिचारो दुर्वार एव, यादृशस्थले स्वभावादेव व्यभिचारादिशङ्काविरहस्तादृशस्थले तर्कं विनैव प्रमात्मकव्याप्तिग्रहस्य कदाचिद् भ्रमात्मकव्याप्तिग्रहस्योदयेन तर्करूपकारणाभावस्य तदानीं सत्त्वादित्येवं न चेत्यादिनाऽऽशङ्क्य प्रमाभ्रमप्रयोजकत्वाऽसंभवादित्यन्तेन समाधानं बोध्यम् । यद्यपीत्यादेरुत्तरं—तथापीति । सत्येति । प्रमात्मकव्याप्तिज्ञानादित्यर्थः । भावमाह—तथा चेति । व्याप्तिप्रमात्वेति । तथा च विशेष्यतासंबन्धेन व्याप्तिप्रमात्वावच्छिन्नं प्रति विशेष्यतासंन्धेन व्याप्तिप्रमात्वेन हेतुता । व्याप्तिप्रमोत्पादात्पूर्वमवश्यं व्याप्तिप्रमायाः सत्त्वमावश्यकमन्यथा व्याप्तिप्रमैव नोत्पद्यत इति भावः । व्याप्तिभ्रमेति । विशेष्यतासंबन्धेन व्याप्तिभ्रमत्वावच्छिन्नं प्रति विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकव्याप्तिप्रमाभावत्वेन स्वरूपसंबन्धेन कारणत्वमित्याशयः । सामानाधिकरण्येति । कार्यकारणयोरेकाधिकरणवृत्तित्वमित्यर्थः । प्रत्यासत्तिः=संबन्धः ।

नन्वेवं यदा तत्पुरुषीयव्याप्तिप्रमा पूर्वं नास्ति तदा व्याप्तिप्रमैव नोत्पद्यतामित्यत आह—सर्वत्रेति । तथा च व्याप्तिप्रमापूर्वमवश्यमेव भागवती व्याप्तिप्रमा वर्तत इति न कुत्रापि व्यभिचार इति भावः । विशेषदर्शनसत्यत्वाऽसत्यत्वं विशिष्य दर्शयति–पुरुषत्वप्रमेति । पुरुषत्वप्रमापुरुषत्वभ्रमाभावाभ्यामित्यर्थः । तथा च विशेष्यतासंबन्धेन पुरुषत्वप्रमात्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन प्रमात्मकपुरुषत्वव्याप्यदर्शनं हेतुः । एवं विशेष्यतासंबन्धेन पुरुषत्वभ्रमत्वावच्छिन्नं प्रति विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्य पुरुषत्वव्याप्यप्रकारकप्रमाभावस्य स्वरूपसंबन्धेन हेतुतेत्यभिप्रायः । यत्रेत्यादि । यस्मिन् स्थल इत्यर्थः । स्वतःसिद्धशङ्काविरहः=तर्कविघटशङ्कायाः स्वभावादेवानुत्पादः । तत्र=तादृशस्थले । तर्कं विनैवेति । तर्कविघटकशङ्काविघटकमित्यादिः । व्याप्तिग्रहः=तर्कमू-

अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तरापेक्षा, यत्र तु व्याप्तिस्मरणं हेतुस्तत्र न तर्कान्तरापेक्षेति नाऽनवस्था । अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमितिहेतुर्व्याप्तिस्मरणं तदानीं व्याप्त्य-(नुभावकाभावात्) नुभवाभावात्, तन्मूलाऽनुभवमूला चाग्रेऽपि व्याप्तिस्मरणपरम्परेति ।

---

स्वयमुक्तम् ।

'प्राञ्चस्तु तर्कस्य व्याप्तिग्राहकत्वमभ्युपेत्य प्रकारान्तरेणानवस्थां परिहरन्ति, तदेवाह-*अपरे त्विति* । *यत्र तु व्याप्तिस्मरणमिति* । व्याप्त्यनुभवं प्रत्येव तर्कस्य हेतुत्वादिति भावः । व्याप्तिस्मरणे तर्कापेक्षा नास्तीत्यत्र हेतुमाह—*अस्ति चेति* । भवति चेत्यर्थः । चो हेतौ । *व्याप्तिस्मरणमिति* । तर्कं विनैवेति शेषः । *व्याप्त्यनुभावकाभावादिति* । तर्काभावादित्यर्थः । यद्वा ननु जातमात्रस्य व्याप्तिज्ञानं स्मरणमेव न, किन्तु अनुभवरूपमित्यत आह—*तदानीमिति* ।

ननु तथापि विनाऽनुभवं स्मरणायोगाज्जन्मान्तरीणो व्याप्त्यनुभवो हेतुर्वाच्यस्तत्र तर्को हेतु स्तत्र तर्के व्याप्त्यनुभवान्तरं हेतुरिति क्रमेणानवस्था तदवस्थैवेत्यत आह-*तन्मूलेति* । व्याप्तिस्मरणमूलको यः प्राग्भवीयव्याप्त्यनुभवस्तन्मूलिका अग्रे=भाविजन्मनि व्याप्तिस्मरणपरम्परेत्यर्थः ।

---

लीभूतव्याप्तिग्रहः । स्वयमुक्तं=मूलकारेणोक्तम् ।

प्राचीनमते तर्कस्य व्याप्तिग्राहकत्वमेव, तन्मते यदि तर्कमूलीभूताऽपि व्याप्तिः तर्कादेव भवति तदाऽनवस्था स्यादतस्तन्मते प्रकारान्तरेणानवस्थापरिहारायाऽपरेत्वित्यादिना मूलकृता प्रदर्शितं पन्थानं स्वयं विशिष्य दर्शयति—व्याप्त्यनुभवं प्रत्येवेति । एवकाराद् व्याप्तिस्मरणे तर्कस्य हेतुत्वव्यच्छेदः । चो हेताविति । यतो व्याप्त्यनुभवस्तर्कं हेतुर्न तु व्याप्तिस्मरण अत एवेत्यर्थः । तथाच जातमात्रस्य स्तन्यपानादौ सुखसाधनतानुमितौ हेतुभूतव्याप्तिस्मरणे तर्को न हेतुः व्याप्त्यनुभवं प्रत्येव तर्कस्य हेतुत्वादिति नानवस्थेति भावः । जातमात्रस्य व्याप्तिज्ञानं स्मरणरूपमेवेत्यत्र प्रमाणं दर्शयितुमाह—यद्वेति । तदानीमितीति । तथा च जातमात्रस्य व्याप्तिज्ञान नानुभवरूपं, तदानीं व्याप्त्यनुभवजनकतर्काभावादित्याशयः । यद्यपि जातमात्रस्य व्याप्तिस्मरणं प्रति जन्मान्तरीयव्याप्त्यनुभवः संस्कारद्वारा हेतुः, अनुभवं विना स्मरणानुपपत्तेः । एवञ्च तादृशव्याप्त्यनुभवं प्रत्यपि तर्को हेतुः, तादृशतर्कमूलीभूतव्याप्त्यनुभवेऽपि तर्कान्तरं हेतुरित्यनवस्था दुर्वारैव । तथापि तत्तज्जन्मनि स्तन्यपानादौ सुखसाधनतानुमितिजनकव्याप्तिस्मरणे तर्कस्याहेतुत्वात्कदाचित्कदाचित्तर्कविच्छेदेन नाऽनवस्थेत्यादिकं नन्वित्यादिनाऽऽशङ्क्य 'व्याप्तिस्मरणमूलको य' इत्यादिना समाधत्ते-प्राग्भवीयेति । पूर्वजन्मोत्पन्नो व्याप्त्यनुभव इत्यर्थः । तन्मूलिका = तज्जन्या । भाविजन्मनि = भविष्यज्जन्मनि । भावमाह—

यत्त्वनादिसिद्धकार्यकारणभावविरोधादमूलाः केचित्तर्का इति

तथा च जन्मान्तरीयव्याप्तिस्मरणमूलीभूतव्याप्त्यनुभवमूलीभूततर्के व्याप्त्यनुभवो न हेतुः, किन्तु व्याप्तिस्मरणमिति नानवस्था, कदाचिदन्तरान्तरा व्याप्तिस्मरणेन विच्छेदात् तर्कधाराया अविरललग्नत्वाभावादिति प्राचामाशयः। अत्रेदमस्वरसबीजं—नहि कदाचिदन्तरा विच्छेद एवानवस्थापरिहारः, किन्तु आत्यन्तिकविच्छेद एवेति सकलसम्प्रदायसिद्धमिति।

तथाचेति। जन्मान्तरीयेति। तत्तज्जन्मनि व्याप्तिस्मरणकारणीभूतव्याप्त्यनुभ जनके तर्के इत्यर्थः। व्याप्त्यनुभवविव्यादि। तर्कमूलीभूताया व्याप्तेरनुभवो न कारणमित्यर्थः। व्याप्तिस्मरणमितीति। तथा च तादृशस्मरणे तर्कस्य कारणत्वमेव न संभवतीत्याशयः।

नानवस्थेत्यत्र हेतुमाह—कदाचिदिति। तत्तत्पुरुषीयतत्तदुत्पत्तिकालावच्छेदेन यदा व्याप्तिस्मरणं भवति तदा पूर्वं तर्काभावेनाऽनवस्थैव न संभवतीति हृदयम्। विच्छेदादिति। कदाचिदिति पूर्वेणान्वयः। तर्कधाराया इति। व्याप्त्यनुभवमूलीभूताया इत्यादिः। अविरललग्नत्वेति। तथा च मध्ये मध्ये एकस्यैव पुंसो व्याप्तिस्मरणस्योदयात् तत्पूर्वञ्च तर्कापेक्षाया अनावश्यकत्वात्तर्कस्य धारावाहिकत्वाभावादेव नानवस्थेति तात्पर्यम्।

प्राचीनमतेऽस्वरसं दर्शयति—नहीति। कदाचित्=किञ्चित्कालावच्छेदेन। अन्तरा=तत्तज्जन्मनि। विच्छेद एवेति। तर्कस्येत्यादिः। आत्यन्तिकविच्छेदे=सर्वकालावच्छेदेन तर्काभावे। एवेति। एवकारात्किञ्चित्कालावच्छेदेन तर्काभावस्याऽनवस्थापरिहारहेतुत्वव्यवच्छेदः। तर्कप्रतिबन्धकशङ्कानुत्पादो यदि सर्वकालावच्छेदेन तर्काभावातिरिक्तकारणप्रतियोगिकाभावादेव भवति, तदैवाऽनवस्थापरिहारः स्यात्, न तु यत्किञ्चित्कालावच्छेदेन तर्कं विनाऽपि व्याप्तिज्ञानसंभवेऽनवस्थापरिहारः कदाचित्सम्प्रदायसिद्धः, तर्कस्याऽऽत्यन्तिकोच्छेदासंभवादित्याशयः।

मूले अनादिसिद्धेति। अनादित्वं स्वसजातीयानां ध्वंसव्यापकप्रागभावप्रतियोगित्वं, तेन रूपेण सिद्धा निश्चिता ये कार्यकारणभावविरोधास्तन्मूलास्तर्कविघटकशङ्काविघटकत्वेन प्रयोजकीभूता इत्यर्थः। केचित्तर्का इति। वह्न्यादावनादिसिद्धधूमकारणत्वनिश्चयस्तत्र धूमकारणत्वाभावकोटिकशङ्काप्रतिबन्धकतया 'धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादि' त्यादितर्कोत्थापकत्वेन वह्निधूमव्याप्तिग्रहे प्रयोजकः। एवं 'शिंशपा यदि वृक्षान्यतादात्म्यवती स्यात्तदा वृक्षतादात्म्यवती न स्यादि'त्याकारकतर्कस्य प्रतिबन्धकशङ्काविघटकन्तु भेदाऽभेदयोरनादित्वेन विरोधज्ञानम्। तच्च तादृशशङ्कानुत्पादकतया वृक्षशिंशपयोस्तादात्म्येन व्याप्तिग्रहप्रयोजकं भवति। तथा च तादृशतर्के तर्कान्तरस्याऽप्रयोजकतया नानवस्थेति भावः। कार्यकारणभावादौ अनादिसिद्धत्वज्ञानमवश्यं प्रमाणजन्यं वाच्यम्। प्रमाणप्रश्ने यदि तद् अनुमानप्रमाणजन्यं, तदा तत्रापि व्यभिचारशङ्कानिरासार्थं तर्कान्तरस्याऽऽवश्यकतेति नानवस्थापरिहारः संभवतीत्याशयेन दूषयति—

तन्न; तत्र प्रमाणानुयोगेऽनुमान एव पर्यवसानात्। न च व्याप्तिग्रहाऽन्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानमिति वाच्यम्; अनुपपत्तेरप्यनुमानत्वात्।

---

कार्यकारणभावविरोधादीनामनादिप्रसिद्धिविषयत्वनिश्चय एव कुत्रचित्तर्के संशयनिवर्तक इति केचित्तु वदन्ति, तन्मतमाशङ्क्य निराकरोति-*यत्त्विति*। अनादिसिद्धेति कार्यकारणभावविरोधादीनां विशेषणम्। तथा चानादित्वेन=अनादिप्रसिद्धिविषयत्वेन, सिद्धः=निश्चितः कार्यकारणभावादयः, क्वचित्तर्के संशयनिवर्तिका इति नानवस्थेत्यर्थः। यथाश्रुते कार्यकारणभावे विरोधे चानादित्वस्य दुर्वचत्वात्। आदिना व्याप्तिपरिग्रहः। *तत्रेति*। कार्यकारणभावादीनामनादिप्रसिद्धिविषयत्व इत्यर्थः। प्रमाणानुयोगे=प्रमाणप्रश्ने। *अनुमान एवेति*। प्रत्यक्षस्य तत्रासंभवादित्यर्थः। तथा च तत्राप्यनुमाने तर्कापेक्षाऽऽवश्यकीत्यनवस्था तदवस्थैवेति भावः। व्याप्तिग्राहकतर्कमूलीभूतव्याप्तिग्रहो न तर्कान्तरादपितु व्याप्तिग्रहान्यथानुपपत्तिग्रहादेवेत्याह-*नचेति*। अनुमानत्वात्=व्याप्तिनिश्चयाधीनप्रवृत्तिकत्वात्।

---

तन्नेति। तत्र=अनादिसिद्धत्वज्ञाने। प्रमाणानुयोगे=प्रमाणप्रश्ने। अनुमान एवेतीति। अनादिसिद्धत्वस्य कार्यकारणभावादौ विवादग्रस्तत्वादित्याशयः। न चेति। वाच्यमिति॰ परेणान्वयः। व्याप्तिग्रहान्यथानुपपत्त्या=व्याप्तिग्रहान्यथानुपपत्तिज्ञानेन। तर्कस्येत्यादि। तर्कमूलीभूतानादिसिद्धव्याप्तिकत्वज्ञानं भवतीति शेषः।

अर्थापत्तिप्रमाणस्यापि नैयायिकमतेऽनुमानमध्येऽन्तर्गततया तत्रापि व्यभिचारशङ्कानिवृत्त्यर्थं यदि तर्कान्तरापेक्षा स्यात्तदा स्यादेवानवस्थेत्याशयेन समाधत्ते—अनुपपत्तेरप्येति। अनासिसिद्धिविषयत्वस्याऽज्ञायमानस्य शङ्काविरोधित्वे प्रमाणाभावः, कथञ्चित्तस्य सप्रमाणकत्वेऽपि प्रमाणानुयोगइत्यादिमूलाऽसङ्गतिः स्यात् प्रमाणानां ज्ञानफलकत्वनियमादित्याशयेनाह टीकायाम्—अनादीति। तथा चाऽनादिसिद्धिविषयत्वनिश्चयस्यैव शङ्काप्रतिबन्धकत्वमिति भावः। समुदितार्थमाह—तथा चेति। अनादीति। अनादित्वप्रकारकज्ञानविशेष्यत्वेनेत्यर्थः। कुत्रचित्तर्क इति तु पूर्वमेव प्रपञ्चितमस्माभिः। नानवस्थेति। तर्कस्य तर्काजन्यत्वेनेत्यादिः। अनादित्वस्य विरोधे कार्यकारणभावे चानुगततया वक्तुमशक्यत्वादाह—यथा श्रुत इति। तादृशाविरोधादिनामित्यत्र आदिपदग्राह्यमाह—व्याप्तिपरिग्रह इति। स्वतःसिद्धव्यभिचारशङ्कादिविरहस्थलीयेत्यादिः। प्रत्यक्षस्य=प्रत्यक्षप्रमाणस्य। तत्राऽसम्भवादिति। अनादिसिद्धिविषयत्वस्य अनादित्वघटिततयाऽतीन्द्रियत्वादिति भावः। पीनत्वाऽन्यथानुपपत्तिग्रहाद् यथा ब्राह्मणादौ भोजनकल्पनं, तथा व्याप्तिग्रहान्यथानुपपत्तिग्रहादपि तर्कमूलीभूतव्याप्तिकल्पनं संभवति, न तु तर्कान्तरादेव तर्कमूलीभूतव्याप्तिग्रह इत्यपि मतं न समीचीनमित्याह—व्याप्तिनिश्चयाधीनेति। अनुपपत्तेरुपपादकाभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिनिश्चयाधीनापादकज्ञानजन्य-

अन्ये तु विपक्षबाधकतर्कादनौपाधिकत्वग्रह एव, तदधीनो व्याप्तिग्रह इति, तदपि न; तर्कस्याप्रमाणत्वात्। व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादिसहकारी स इति चेन्न; अनवस्थाभयेन तर्कं विना व्याघाताद् यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात्।

---

यथाश्रुतासंगतेः, परैरर्थापत्तेरनुमानत्वानभ्युपगमात्। तथा च तत्रापि तर्कापेक्षावश्यकीत्यनवस्था तदवस्थेति भावः।

तदेवं व्यभिचारादर्शनसहकृतसहचारज्ञानं व्याप्तिग्राहकं, तर्कः शंकानुत्पत्तौ प्रयोजक इति व्यवस्थाप्य तर्कादनौपाधिकत्वग्रहस्तदुभाभ्यां मिलित्वा व्याप्तिग्रह इत्येकदेशिमतमाशङ्क्य दूषयति-*अन्येत्विति*। *तदधीनेति*। तयोरधीन इत्यर्थः। अनौपाधिकत्वग्रहे व्याप्तिग्रहे च तर्कः स्वतन्त्रो हेतुः, प्रमाणसहकारी वा, नाद्य इत्याह-*तर्कस्येति*। तथा च प्रमाणस्य स्वतन्त्रतया ज्ञानजनकत्वनियमेन तर्कस्य प्रमाणत्वासम्भवाज्जनकत्वाभाव इत्यर्थः। द्वितीयमाशङ्कते-*व्यभिचारादीति*। आदिपदादुपाधिपरिग्रहः। व्याघातात्=तर्काभावातिरिक्तकारणान्तराभावात्। विरहः=अनुत्पादः। व्याप्तिग्रहे अनौपाधिकत्वग्रहे च।

---

प्रवृत्तिकत्वादित्यर्थः। परैः=मीमांसकादिभिः। अनुमानत्वानभ्युपगमादिति। मूले अनुपपत्तेरनुमानत्वाभिधानं यथाश्रुते न संगच्छते मीमांसकप्रभृतिभिरर्थापत्तेरनुमानातिरिक्तप्रमाणत्वस्य स्वीकरणीयत्वादिति हृदयम्। तत्रापि=अनुपपत्तिरूपव्याप्तिज्ञानेऽपि। अनवस्थेतीति। तथा च तादृशव्याप्तिज्ञानात्पूर्वं यदि व्यभिचारादिशङ्का स्यात्तदा स्यादेव तर्कान्तरेण तादृशशङ्कानिवृत्तिरित्यनवस्थेत्याशयः। मूले विपक्षेति। विपक्षे साध्याभाववति यो बाधः हेतोरभावः व्याप्तिरिति यावत्, तत्प्रयोजकात्तर्कादित्यर्थः। अनौपाधिकत्वग्रह इति। अनौपाधिकत्वग्रहः=उपाध्यभावग्रहः। एवेति। एवकारात्तर्केण शङ्कानिवृत्तिव्यवच्छेदः। टीकायाम् उभाभ्यामिति। तर्कानौपाधिकत्वग्रहाभ्यामित्यर्थः। तयोरधीनः=तर्कव्याप्तिग्रहयोरधीनः। तथा च तर्कं प्रति अनौपाधिकत्वज्ञानं प्रयोजकं, व्याप्तिज्ञाने च तर्कः अनौपाधिकत्वज्ञानञ्च हेतुः। स्वतन्त्रः=प्रमाणान्तराऽसहकारो सन्। नाद्येति। तर्कः स्वतन्त्रो हेतुरिति न युक्तमित्याहेत्यर्थः। स्वतन्त्रतया=स्वभिन्नप्रमाणान्तराऽसहकारितया। ज्ञानेति प्रमेत्यर्थकम्। प्रमाणत्वासंभवादिति। तर्कस्यानौपाधिकत्वज्ञानसहकृतस्यैव व्याप्तिग्रहजनकताया मूले अभिहितत्वादित्याशयः। जनकत्वाभावेति। व्याप्तिग्रह इत्यादिः। द्वितीयं=प्रमाणसहकारी सन् तर्को हेतुरिति पक्षम्। तथा च तर्कस्य प्रमाणाभावेऽपि प्रत्यक्षादिप्रमाणसहकारी स व्यभिचारशङ्कां विघटयन् व्याप्तिग्रहजनकः स्यादित्यपि न युक्तमिति भावः।

उपाधिपरिग्रहः=अयं हेतुरुपाधिमान् न वेति शङ्कानुत्पादोऽपि तर्केणैवेति तात्पर्यम्। व्याघातादिति। अयमाशयः—तर्को यदि व्याप्तिग्रहे अनौपाधिकत्वग्रहे च व्यभिचारोपाधिशङ्काविघटनद्वारा जनक इति भवता स्वीक्रियते, तदा यादृशस्थले तर्कस्याऽसत्त्वे-

( चि० म० ) तत्सन्देहे सत्यर्थसन्देहेन अर्थानिश्चयादेवाप्रवृत्तेः तत्र तयोरप्रतिबन्धकत्वादिति चेत् ? न

( दी० ) प्रवृत्तीति प्रकृताभिप्रायम् । यत्प्रतिबन्धकाविरयर्थः । तत्सन्देह इति ।

( गा० ) इदमापाततः, कारणतावच्छेदकलाघवानुरोधेन फलानुपधायकसाधारणस्वरूपयोग्यताकल्पने क्षतिविरहात् । तद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकत्वे तज्ज्ञानत्वेन हेतुताकल्पनेऽपि क्षतिविरहादुक्तयुक्त्या निश्चयत्वेन हेतुतासिद्धेरसम्भवदुक्तिकत्वाच्च ।

विशेषतः प्रवृत्तेर्व्याप्तावन्तर्भावेऽनुमितेर्दृष्टान्तत्वासङ्गतिरिति विशेषतस्तदन्तर्भावो नाभिप्रेतः अपितु यत्त्वतत्त्वमात्रेणेत्याह *प्रवृत्तीति* । ननु प्रामाण्यसंशयदशायाम् अर्थानिश्चयादेव प्रवृत्त्यभावनिर्वाहात् प्रामाण्याभावज्ञानस्य कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वासिद्धेरुक्तानुमानं स्वरूपासिद्ध्या दुष्टमिति मूलोक्तं न सङ्गच्छते, प्रवृत्तावर्थनिश्चयस्येव प्रामाण्या-

( प्रभा ) यद्व्यतिरेकनिश्चययोर्यत्र प्रतिबन्धकता तत्र तद्व्यतिरेकज्ञानत्वेनैव हेतुता युक्ता नतु तन्निश्चयत्वेनेति वाच्यम् ? अभावस्य हेतुत्वपक्षे व्यतिरेकज्ञानस्य प्रतिबन्धकत्वे अप्रामाण्यनिश्चयानास्कन्दितत्वं निवेशनीयम् इति गौरवापत्तेः निश्चयस्य हेतुत्वेऽप्रामाण्यज्ञानानास्कन्दितत्वनिवेशेन लाघवात् । यद्वा व्याप्तिज्ञानाभावदशायां तद्व्यतिरेकज्ञानाभावसत्त्वेऽपि अनुमित्यनुत्पादात् प्रमात्वज्ञानजन्यत्वसिद्धावपि न क्षतिः, प्रमात्वसंशये सति प्रवृत्त्यनुत्पादेन स्वरूपयोग्यताकृत्वकल्पनेऽपि न दोष इतः स्वाभिप्रेतार्थमाह गदाधरः इदमापातत इति । इदम् = निश्चयजन्यत्वम् । कारणतावच्छेदकलाघवानुरोधेनेति । निश्चयत्वेन कारणत्वे संशयान्यत्वज्ञानत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतावच्छेदकगौरवम्, । तदपेक्षया ज्ञानत्वस्य कारणतावच्छेदकत्वे लाघवमिति भावः । क्षतिविरहादिति । अस्य च असम्भवदुक्तिकत्वेन सम्बन्धः । तथाच यतः क्षतिविरहः अतः दीधितिकारोक्तयुक्त्या निश्चयत्वेन हेतुत्वसिद्धिरसम्भवदुक्तिकेति फलितार्थः । उक्तयुक्त्येति । तत्संशयात्तत्कार्यानुत्पत्तेरिति दीधितिकृद्युक्त्येत्यर्थः ।

माध्यमिकशङ्कां तटस्थो निराकुरुते तत्सन्देहे सति इतिचि०म० प्रयोजनवत्त्वज्ञानधर्मिकप्रामाण्यसन्देहे सतीत्यर्थः । अर्थसन्देहेनेति । अर्थनिश्चयोत्तरार्थसंशयम् प्रति अर्थनिश्चयधर्मिकाप्रामाण्यसंशयस्य हेतुतया इष्टसाधनत्वसन्देहस्यैवोत्पादेनेत्यर्थः । अर्थानिश्चयादेवेति । इदम् इष्टसाधनम् एव इत्याकारकनिश्चयाभावादेवेत्यर्थः । तत्र = प्रवृत्तौ । तयोः = प्रमात्वसंशयप्रमात्वव्यतिरेकनिश्चययोः । अप्रतिबन्धकत्वादिति । तथा च स्वरूपासिद्धिरितिभावः । इति चिन्तामणेः स्थूलार्थः ।

उक्तानुमानमिति । प्रवृत्तिः प्रामाण्यव्यतिरेकनिश्चयजन्या प्रामाण्यव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वादित्यनुमानमित्यर्थः । स्वरूपासिद्ध्येति ।

(दी०) क्लृप्तकारणसद्भावे यत्सत्त्वे कार्यानुत्पादः अनायत्या तस्यैव प्रतिबन्धकत्वं कल्प्यते, नचेह तथा।

---

(गा०) भावज्ञानाभावस्यापि कारणताग्राहकनियतान्वयव्यतिरेकसत्त्वेन कारणतायादुरपह्नवत्त्वादित्याशङ्कां निराकरोति *क्लृप्तेत्यादिना*। *तस्य प्रतिबन्धकत्वम्* = तदभावस्यानन्यथासिद्धत्वम् कल्प्यते। नचेह *तथेति*। प्रकृते क्लृप्तापरसकलकारणसत्त्वे प्रामाण्यसंशयादिसत्त्वे प्रवृत्त्यनुत्पाद इति नेत्यर्थः।

प्रामाण्यसंशयाद्यभावेऽपि विनाऽर्थनिश्चयमप्रवृत्तेः तद्धेतुताया आवश्यकत्वात्। प्रामाण्यसंशयदशायां च तदसत्त्वेनाप्रवृत्तेः इतरसकलकारणासम्पत्तेरिति भावः। तथाच नियतान्वयव्यतिरेकेऽपि प्रामाण्याभावज्ञानाभावस्यान्यथासिद्धत्वमेवेति न तज्ज्ञानस्य कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वं शङ्कास्पदमपीति मूलसङ्गतिः।

अथार्थनिश्चयकाले तद्द्वितीयक्षणे वा यत्र प्रामाण्यसंशयः तत्र तादृशार्थनिश्चयद्वितीयक्षणे तत्तृतीयक्षणे वा प्रवृत्त्यापत्तिवारणाय प्रामाण्यसंशयस्य

---

(प्रभा) तथाचार्थनिश्चये यदि प्रमात्वसंशयो वर्त्तते तदार्थस्य संशय एव जायते, तत्सन्देहे च अर्थनिश्चयरूपकारणविरहादेव प्रवृत्त्यभावोपपत्तौ प्रवृत्तिम् प्रति प्रामाण्यव्यतिरेकज्ञानाभावस्याहेतुत्वात् कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य प्रामाण्यव्यतिरेकज्ञाने विरहाद् भवेत् स्वरूपासिद्धिरिति भावः।

तदसत्त्वेनेति। अर्थनिश्चयासत्त्वेनेत्यर्थः। अर्थनिश्चयोत्तरार्थसंशयम्प्रति अर्थनिश्चयधर्मिकप्रामाण्यसंशयस्य हेतुत्वेन प्रामाण्यसंशयस्य अर्थसंशयसम्पादकतया अर्थनिश्चयविरहप्रयोजकत्वादितिभावः। स्वरूपासिद्धिपरिहाराय प्रामाण्यसंशयस्य प्रतिबन्धकत्वं व्यवस्थापयति अथेत्यादिना। अयम् भावः. प्रवृत्तौ प्रमात्वव्यतिरेकज्ञानस्य प्रतिबन्धकत्वं यदि नाङ्गीक्रियते तदा घटादिरूपार्थनिश्चयक्षण एव तन्निश्चयधर्मिकसमूहालम्बनप्रमात्वसंशयो यदा तदा तादृशनिश्चयद्वितीयक्षणे प्रवृत्त्युत्पादापत्तिः, पूर्वक्षणेऽर्थनिश्चयादिघटितप्रवृत्तिकारणसमुदायस्य सत्त्वात्। अतः प्रामाण्यव्यतिरेकज्ञानस्यापि प्रवृत्तौ प्रतिबन्धकत्वं वाच्यम्, तथासति च पूर्वक्षणेऽर्थनिश्चयसत्त्वेऽपि प्रामाण्यव्यतिरेकज्ञानरूपप्रतिबन्धकस्य सत्त्वात् न प्रवृत्त्युत्पादापत्तिरिति। प्रामाण्यसंशय इति। प्रामाण्यव्यतिरेकनिश्चयस्यचेति शेषः। प्रामाण्यसंशयसामग्र्याः अर्थनिश्चयविरोधित्वेऽप्याह[1] तद्द्वितीयक्षणे वेति। प्रवृत्त्यापत्तिवारणायेति। तथाच प्रमाणतत्त्वज्ञानम् इष्टसाधनम् इति ज्ञानम् तादृशज्ञानधर्मिकप्रामाण्यसंशयस्य समूहालम्बनरूपं यत्र तत्र द्वितीयक्षणे प्रवृत्त्यापत्तिवारणाय, यत्र च क्रमेण तौ तत्र तृतीयक्षणे प्रवृत्त्यापत्तिवारणायेत्यर्थः।

नच कार्यसहभावेन अर्थनिश्चयस्य हेतुत्वोपगमात् नेयमापत्तिरिति वाच्यम्? तथासति यत्र प्रथममर्थनिश्चयः ततो द्वितीयक्षणे कुतश्चित् प्रतिबन्धकवशात् न प्रवृत्त्युत्पत्तिः तत्र तृतीयक्षणे प्रवृत्त्यभावापत्तेः। प्रामाण्यसंशयस्येति। प्रामाण्यव्यतिरेकज्ञानस्ये-

---

१ यदि प्रथमक्षणेऽर्थनिश्चयधर्मिकसंशयो वर्त्तते तदा पूर्वक्षणे समुदायकारण-

वज्रलेपाच्च । अपि च करवह्निसंयोगः शक्त्यतिरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वान्न साधकं, तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं नाम ? तस्माद् विपक्षबाधकतर्काभावान्न तत्र व्याप्तिग्रह इत्यप्रयोजकत्वमिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे तर्कनिरूपणम् ॥

---

तिरेकज्ञानस्य ।

नन्तु तादृशानुमानमात्रोच्छेदकत्वज्ञानमेव तत्र साध्यव्यापकत्वज्ञानविरोधीत्यस्वरसादाह—*अपि चेति* । *शक्तयतिरिक्तेति* । न चास्मन्मते साध्याप्रसिद्धिः, पररीत्यैव परं प्रत्यभिधानात् । स्वमते तु शक्तयतिरिक्तत्ववह्निर्भावेन साध्यं वोध्यम् । न साधकम्=न लिङ्गम्, व्याप्तस्य=व्याप्तत्वेन निश्चितस्य, पक्षधर्मत्वे=पक्षधर्मत्वनिर्णये । *न तत्रेति* । व्यभिचारसंशयसामग्रीसत्त्वेन न तत्र व्याप्तिनिश्चय इत्यर्थः ।

इति श्रीमथुरानाथतर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्येऽनुमानाख्यद्वितीयखण्डरहस्ये तर्करहस्यं समाप्तम् ।

---

यथाश्रुते वस्तुसत्त्वस्य सन्दिग्धतया ज्ञानपर्यन्तानुसरणम् । मूले वज्रलेपादिति । तथा च व्यभिचारानुमापकतयोपाधेर्न दूषकत्वमपि तु साध्यव्यापकस्योपाध्यभावज्ञानेन पक्षे व्याप्यस्य साध्यस्याभावज्ञाननिबन्धनमेव तस्य दूषकत्वं, तदानीं पक्षे साध्यज्ञानासंभवादित्याशयः । टीकायां तादृशेति । सन्दिग्धसाध्यपक्षकानुमानमात्रोच्छेदकत्वज्ञानमेवेत्यर्थः । एवकारात्तर्कस्य विरोधित्वव्यवच्छेदः । तत्र = पक्षेतरत्वे । साध्येति । संशयनिश्चयसाधारणसाध्यव्यापकत्वज्ञानं प्रति प्रतिबन्धकमित्यर्थः । मूले करवह्नीति । हस्तवह्निसंयोग इत्यर्थः । शक्त्येति । शक्तिभिन्नातीन्द्रियधर्मसमवायीत्यर्थः । जनकत्वादित्यनेनादृष्टस्य दृष्टान्तत्वं सूचितम् । न साधकं=नानुमापकम् । पक्षधर्मत्वे=पक्षवृत्तित्वे ।

उपसंहरति—तस्मादिति । तथा च भवन्मते सहचारग्रहस्य सत्त्वात्तत्र व्याप्तिग्रहोदयेन हेतोरनुमापकत्वं स्यादतस्तर्काभावादेव तत्र न व्याप्तिग्रह इत्येवं वक्तव्यमिति भावः । ननु नैयायिकमते शक्तेरप्रसिद्धतया साध्याप्रसिद्धिः स्यादित्याशङ्क्य समाधत्ते टीकायां—परारीत्यैवेति । शक्तिस्वीकर्तॄणां मतमवलम्ब्यैवेत्यर्थः । परं प्रति=तादृशशक्तिवादिनं प्रति । स्वमते तु=नैयायिकमते तु । शक्त्येति । तथा च तन्मते अतीन्द्रियधर्मसमवायित्वमात्रं साध्यं पर्यवसितमिति भावः । न लिङ्गमिति । भवितुमर्हतीति शेषः । अनिश्चितस्यानुमित्युत्पादाऽप्रयोजकत्वादाह—निश्चितस्येति । एवमग्रेऽपि निर्णयपदोपादानं वोध्यम् । हेतुपूरणेन व्याप्तिनिश्चयाभावं समर्थयति—व्यभिचारेति । न तत्र=न तादृशहेतावित्यास्तां विस्तरः ।

इति-श्री वामाचरणभट्टाचार्यकृततर्कमाथुरीकृतविवृतिः समाप्ता ।

श्रीगणेशायनमः

अथानुमानगादाधर्यां
सत्प्रतिपक्षप्रकरणम् ।

# अथसत्प्रतिपक्षचिन्तामणिः

**सत्प्रतिपक्षत्वं न समानवलबोधितसाध्यविपर्ययलिंगत्वम्,**

## अथ सत्प्रतिपक्षगादाधरी

समानवलेत्यादिमूलस्य प्रकृतसाध्यानुमापकवलशालित्वे सति प्रकृतसाध्याभावानुमापकवलशालिहेत्वन्तरकत्वमित्यर्थः ।

## अथ सत्प्रतिपक्षविलासिनी

यत्कारुण्यकणस्पर्शान्मूकोवाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥१॥
सहस्रवारं पितरौ प्रणम्य प्रणम्य च श्रीचरणे गुरूणाम् ।
ज्वालाप्रसादः सुविचिन्त्य चैनां गदाधरोक्तिं विवृणोति धीरः॥२॥

समानेति । स्व[1]समानवलेन बोधितः "अनुमितः" साध्यविपर्ययो यस्य (स्वस्य) तादृशं यल्लिंगं इति व्युत्पत्या फलितार्थमाह । प्रकृतेति वलनिष्ठमनुमापकत्वं चानुमितिजनकज्ञानविषयत्वम्, उभयत्र विषयताया विशेषणविधया निवेशात्कालान्तरीयज्ञानविषयत्वमादाय नातिप्रसंगः । वलं च व्याप्तिपक्षधर्मते इति स्वयमेव वक्ष्यति । केवलविपरीतपरामर्शदशायां तद्विरहदशायांवाऽतिव्याप्तिवारणाय विशेषणविशेष्यदलयोरुपादानम् ।

अत्राऽन्तरपदानुपादाने वन्हिव्याप्यधूमवान् पर्वतः वन्हाभावव्याप्यधूमवान् पर्वत इति एकहेतुकपरामर्शद्वयमादाय धूमहेतोः सत्प्रतिपक्षत्वव्यवहारापत्तिः, अन्तरपदोपादाने तु प्रकृतसाध्यानुमापकवलशालित्वे सति प्रकृतसाध्यानुमापकवलशालिहेतुज्ञानान्यभिन्नप्रकृतसाध्याभावानुमापकहेतुकालीनत्वं लभ्यते ततो नोक्तापत्तिः । तथा च प्रकृतहेतुतावच्छेदकावच्छिन्नभिन्नार्थकमन्तरपदम् । न च प्रमेयहेतुकस्थले हेतुतावच्छेदकीभूतप्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्धयाऽव्याप्तिरिति वाच्यम् । हेत्वन्तरपदेन येन रूपेण हेतुतावच्छेदकत्वं तेन रूपेण तदनवच्छिन्नप्रकारताश्रयस्य विवक्षितत्वात् ।

---

१ स्वपदं प्रकृतसाध्यसिद्ध्यौपयिकलिंगपरम् । दुष्टलक्षणमिदम् ।

परस्परप्रतिबन्धेनोभयोरबोधकत्वात् बलं च न सपक्षसत्वादि, व्यतिरेकिण्यभावात् ।

तत्रानुमापकत्वं अनुमितिफलोपहितत्वम्, अनुमितिस्वरूपयोग्यत्वं वा । आद्येदूषणमाह । परस्परेति । अबोधकत्वादित्यस्य सत्प्रतिपक्षतादशायामित्यादिः ।

द्वितीयपक्षे एतद्दोषानवकाशाद् बलपदार्थं वितर्क्य दूषयति । बलंचेति । बलपदार्थश्चेत्यर्थः । सपक्षसत्वादीति । आदिना पक्षसत्व-विपक्षासत्वयोः परिग्रहः । व्यतिरेकिणीति । अभावात् । सपक्षाऽप्रसिद्ध्यातत्सत्वासंभवात् । इदमुपलक्षणम् । सर्वत्रैव सत्प्रतिपक्षे हेतौ पक्षसत्वविपक्षासत्वयोरेकतराभावोपि द्रष्टव्यः ।

नन्वत्र साध्याभावानुमापकत्वं साध्याभावानुमितिजनकज्ञानविषयत्वं, तत्र च साध्याभावानुमितिपदेन साध्याभावत्वावच्छिन्नविधेयताकानुमितिरवश्यं विवक्षणीया, अन्यथा प्रमेयत्वेन वन्ह्यभावानुमितिस्थले सत्प्रतिपक्षव्यवहारापत्तिः एवं सति वन्ह्यभावादेः साध्यतास्थले वन्ह्यभावव्याप्यवत्तापरामर्शकालीनवन्हिव्याप्यवत्तापरामर्शदशायां सत्प्रतिपक्षव्यवहारानुपपत्तिः तत्र वन्ह्यात्मक साध्याभावस्यानुमितेस्तादृशविधेयताकत्वाभावादितिचेन्न । प्रकृतसाध्यनिरूपित प्रतियोगितावच्छेदकधर्मावच्छिन्नविधेयताकानुमितिनिवेशान्न दोष इति ध्येयम् ।

अनुमितिफलोपहितत्वमिति । अनुमित्यात्मकफलविशिष्टत्वमित्यर्थः । वै० स्वाव्यवहितप्राक्क्षणवृत्तित्व-स्वकारणत्वोभयसं० । अनुमितिस्वरूपयोग्यत्वमिति । अनुमितिजनकतावच्छेदकधर्मवत्वमित्यर्थः । अबोधकत्वादिति । तथा चाऽसंभव इति भावः । सत्प्रतिपक्षतादशायामिति । एतच्चापाततः । अनुमितिफलोपहितत्वविवक्षणादेव तल्लाभात् । अत एवोभयोरित्युक्तम् । द्वितीयपक्षे । अनुमितिस्वरूपयोग्यत्वनिवेशपक्षे । एतद्दोषानवकाशेपीति । असंभववारणेपीत्यर्थः । प्रथमे सपक्षत्वं साध्यवत्वेन निश्चितत्वम् विपक्षत्वं च तदभाववत्वेन निश्चितत्वम् । द्वितीये प्रतिहेतुकेसपक्षत्वं साध्याभाववत्वेन निश्चितत्वम् । विपक्षत्वं साध्यवत्वेन निश्चितत्वम् । प्रतिहेतौ स्वहेतुकसाध्याभावस्यैव साध्यत्वात् । व्यतिरेकिणि । पृथिवी इतरभेदवतीत्यादौ । तत्सत्वाऽसंभवादिति । सपक्षसत्वाऽसंभवादित्यर्थः । एकतराभावोपिद्रष्टव्य इति । यत्र पर्वतस्य पक्षत्वं वन्ह्यभावस्य साध्यता तत्र यदि जलस्य हेतुता तदा पक्षसत्वाभावः, यदि धूमस्य हेतुता तदा विपक्षासत्वाभाव इत्यर्थः ।

नापि समानव्याप्तिपक्षधर्मतावत्त्वम्, विरोधेनैकत्र तद्भंगनियमात् ।

समानेति संपातायातम्; बलपदार्थस्य समानत्वाऽघटितत्वात् । विरोधेनेति । विरुद्धसाध्यतदभावव्याप्ययोरेकत्रासत्वनियमेनेत्यर्थः तद्भंगेति । व्याप्तिपक्षधर्मतयोरेकतराभाव इत्यर्थः ।

ननु यत्र पर्वतह्रदान्यतरस्य पक्षता वन्हेः साध्यता धूमस्य प्रकृतहेतुता, जलस्य प्रतिहेतोर्वन्ह्यभावस्य साध्यता तत्र हेतुद्वये पक्षसत्व-विपक्षासत्वयोर्नाभावः, जलरूपप्रतिहेतोः साध्यस्य "वन्ह्यभावस्य" विपक्षोयः पर्वतस्तदवृत्तित्वरूपस्य विपक्षासत्वस्य पर्वतह्रदान्यतरवृत्तित्वस्य वन्हिविपक्षह्रदाऽवृत्तित्वस्य च धूमे प्रकृतहेतौ सत्वादिति चेन्न । वन्हेर्वन्ह्यभावस्य वा तादृशान्यतरत्वावच्छेदेन साध्यत्वमावश्यकम्, अन्यथा उभयस्य सामानाधिकरण्येन साध्यत्वे परस्पर-प्रतिबन्धकत्वाभावेन सत्प्रतिपक्षव्यवहाराभावस्येष्टत्वात् एवं चावच्छेदावच्छेदेन साध्यतास्थलेऽ वच्छेदावच्छेदेन परामर्शस्यैव हेतुतया तादृशान्यतरत्वव्यापक-जलप्रतियोगिकसंयोगस्य तादृशान्यतरत्वव्यापकधूमप्रतियोगिकसंयोगस्य वा पक्षवृत्तितावच्छेदकतया तत्संबन्धावच्छिन्नपक्षवृत्तित्वाभावस्य जले धूमेपि सत्वान्नोक्तग्रन्थासंगतिः ।

मूले—समानव्याप्तिपक्षधर्मतावत्वमिति । समानबलवत्वमिति शेषः । व्याप्तिपक्षधर्मतयोः समानत्वं च तत्कालीनतत्पुरुषीयसाध्यानुमितिजनकस्व-निष्ठसाध्यनिरूपितव्याप्तिपक्षधर्मताज्ञानसमानाधिकरणसमानकालीनज्ञानविषयत्वम् । स्वनिष्ठत्वम् व्याप्तिपक्षधर्मताविशेषणम् । स्वपदं लक्ष्यीभूतलिंगपरम् । तथा च तादृशज्ञानसमानाधिकरणतत्कालीनसाध्याभावानुमितिजनकस्वनिष्ठसाध्याभाव-निरूपितव्याप्तिपक्षधर्मतावत्वं समानबलवत्वमितिभावः । संपातायातमिति । हठादायातमित्यर्थः । सत्प्रतिपक्षानुरोधेनेति यावत्, न तु विवक्षितं लक्षणस्य-समानपदवैयर्थ्यापत्तेः । समानत्वाऽघटितत्वादिति । व्याप्तिपक्षधर्मतयोरेव-बलपदार्थत्वादिति भावः । एकतराभाव इत्यर्थ इति । पक्षधर्मतायाः स्वनिष्ठत्वे व्याप्तेः, व्याप्तेः स्वनिष्ठत्वे पक्षधर्मताया वा स्वस्मिन्न-सत्वादितिभावः । ज्ञायमानत्वमिति । समानबलवत्वमितिशेषः व्याप्ति-विशिष्टस्ववैशिष्ट्येति । स्वं-हेतुः । तेन । व्याप्तिवैशिष्टयस्य स्वस्मिन्वि-शेषणत्वविवक्षणेन । अग्रिममूलसंगतिरिति । नित्यत्वव्याप्तिविशिष्टश्रावण-त्वाऽप्रसिद्धेरिति भावः । यथाश्रुतपरत्वे तु व्याप्तिपक्षधर्मतयोः प्रसिद्धया ग्रन्थाऽसंगतिः स्यादिति भावः । मूले—विरोधिव्याप्तिपक्षधर्मताविशिष्ट-ज्ञानयोरिति । परस्परविरुद्धयोर्व्याप्तिपक्षधर्मयोरेकाधिकरणे ज्ञानस्येत्यर्थः । अन्यतरभ्रमत्वनियमेनेति । व्याप्तिपक्षधर्मत्वान्यतरांशे भ्रमत्वनियमेनेत्यर्थः

नापि व्याप्तिपक्षधर्मतया ज्ञातत्वम्, विरोधिव्याप्तिपक्षधर्मता-विशिष्टज्ञानयोरन्यतरभ्रमत्वनियमेन नित्यत्वव्याप्यश्रावणत्वादि-वैशिष्ट्याऽप्रसिद्ध्याऽऽरोपयितुमशक्यत्वात्। न च साध्यव्याप्यस्य पक्षधर्मता पक्षधर्मस्य वा साध्याव्याप्यताऽऽरोप्येतिवाच्यम्।

व्याप्तिपक्षधर्मतया—व्याप्तिसहितपक्षधर्मतया। ज्ञातत्वं-ज्ञायमानत्वम्। व्याप्तिविशिष्टस्ववैशिष्ट्यज्ञानविषयपक्षकत्वमितिसमुदितार्थः। तेन "नित्यत्वादिव्याप्यश्रावणत्वादिवैशिष्ट्याप्रसिद्ध्ये" त्यग्रिममूल-संगतिः। नित्यत्वव्याप्येति। शब्दोऽनित्यः कृतकत्वादित्यादौ श्रावणत्वादिरूपप्रतिहेतोर्बलस्य भ्रमात्मकव्याप्यवत्ताज्ञानस्याऽऽरोप्या-प्रसिद्ध्याऽसंभवेन समानबलत्वाऽसंभवादित्यर्थः।

एतच्चाऽप्रसिद्ध्या इत्यत्र हेतुः। आरोप्याऽप्रसिद्ध्या। नित्यत्वव्याप्यश्रावण-त्वादिवैशिष्ट्याप्रसिद्ध्या। तथा च शब्दोऽनित्यः कार्यत्वात् शब्दोनित्यः श्रावणत्वादित्यादौ श्रावणत्वादिना सत्प्रतिपक्षिते कार्यत्वादौ लक्षणस्याऽसंभवः, नित्यत्वादिरूपसाध्याभावनिरूपितव्याप्तिविशिष्टश्रावणत्वादिवैशिष्ट्याप्रसिद्ध्या "शब्दो-नित्योगगनत्वादित्यादौ च पक्षधर्मत्वाप्रसिद्ध्या" आरोपाऽसंभवात्समानब-लत्वाऽप्रसिद्धेरिति ध्येयम्।

मूले—साध्यव्याप्यस्येति। साध्याभावात्मकसाध्यव्याप्यस्येत्यर्थः। तथा च नित्यत्वव्याप्ये गगनत्वे पक्षधर्मताऽऽरोप्या, एवं पक्षधर्मे श्रावणत्वे नित्यत्वव्याप्यताऽऽरोप्येति समुदितार्थः। एवं च व्याप्तिविशिष्टत्वविषयक पक्षधर्मताग्रहःपक्षधर्मताविशिष्टत्वविषयकव्याप्तिग्रहो वा बलपदार्थः। उभयत्र स्वं हेतुः। एकत्रेति। एकस्मिन् पक्षे इत्यर्थः। तदुभयाभावादिति। साध्यव्याप्य—साध्याभावव्याप्ययोरुभयोरभावादित्यर्थः। एतच्चाप्रसिद्ध्या इत्यत्र हेतुः। विशिष्टस्याऽप्रसिद्ध्या। साध्याभावव्याप्तिविशिष्टपक्षधर्मत्वाप्रसिद्ध्या।

ननु साध्याभावव्याप्तिविशिष्टपक्षधर्मत्वाऽप्रसिद्ध्या तद्ज्ञानाऽसंभवेपि साध्या-भावव्याप्यादौ पक्षधर्मत्वारोपस्य पक्षधर्मे साध्याभावव्याप्यत्वारोपस्य च संभवा-देकत्र तदुभयाभावादिति मूलनसंगतमतः साध्याभावव्याप्तिविशिष्टपक्षधर्मत्वारोप एव बलमिति व्यवस्थापयिष्यति, तथा च न मूलाऽसंगतिः, तत्रादौ प्रत्येका-रोपस्य बलरूपत्वेऽव्याप्तिमाह। यत्रेति। शब्दोनित्यः श्रावणत्वा-दित्यादावित्यर्थः। अन्यत्र। गगनत्वादौ। तथा च यत्र पक्षे साध्यं बाधितं तत्र पक्षधर्मे "साध्याभावरूप" साध्यव्याप्तेरारोप इति भावः। यत्र। शब्दो नित्यः गगनत्वादित्यादौ। एवकारेण साध्याभावव्याप्तिविशिष्टपक्षधर्मताया आरोपोव्यवच्छिद्यते। इति शंकायामिति। साध्याभावव्याप्तिविशिष्टपक्षधर्मताया

एकत्र तदुभयाभावात् । विशिष्टस्याऽप्रसिद्धया तद्वैशिष्ट्यस्याऽऽरोपासंभवात् ।

–एकत्र तदुभयेति । व्याप्ये पक्षधर्मतायाः, पक्षधर्मे च व्याप्यत्वस्यारोपः प्रत्येकमव्यापकः, अतोविशिष्टस्याऽऽरोपोवाच्यः, स च एक धर्मिणि विरोधिव्याप्यद्वयविरहाद्विशिष्टस्याऽप्रसिद्धया न संभवतीत्यर्थः ।

यत्राऽव्याप्यः प्रतिहेतुः पक्षधर्मस्तत्र श्रावणत्वादौ अन्यत्र प्रसिद्धाया व्याप्तेरारोप एव बलं, यत्राऽपक्षधर्मः प्रतिहेतुः तत्र साध्यव्याप्ये पक्षधमत्वारोप एव बलं इति शंकायां विशिष्टाप्रसिद्धया व्याप्तिविशिष्टपक्षधर्मत्वारोपाऽसंभवाभिधानमसंगतमत आशयं पूरयति-दीधितौ व्याप्य इत्यादिना ।

व्याप्ये । व्याप्ति विशिष्टे । पक्षधर्मे । पक्षधर्मताविशिष्टे । प्रत्येकं । व्याप्तिविशिष्टस्वविषयकपक्षधर्मताज्ञानत्वादिना । अव्यापकः । सकलसत्प्रतिपक्षाऽसंग्राहकः । अव्याप्यादिप्रतिपक्षस्य व्याप्त्यादि विशिष्टस्वाऽप्रसिद्धेरिति भावः । विशिष्टाऽऽरोपः । व्याप्तिविशिष्ट पक्ष धर्मतायाः स्वस्मिन् ग्रहः । वाच्यः । बलपदेन विवक्षणीयः । एकधर्मिणीत्यादिकं एकत्रेत्यादिमूलशब्दविवरणम् ।

विशिष्टस्येति । यादृशसाध्यं पक्षे बाधितं तदीयव्याप्तिविशिष्ट पक्षवृत्तित्वस्याऽप्रसिद्धया न संभवतीति । तथा च नित्यत्वव्याप्तिविशिष्टश्रावणत्वाद्यप्रसिद्ध्या यथा व्याप्तिविशिष्टतद्धेतुधर्मिक पक्षधर्मत्वादिग्रहोऽप्रसिद्धः, तथा नित्यत्वादिव्याप्तिविशिष्टशब्दवृत्तित्वाद्यप्रसिद्ध्या तद्ग्रहोऽप्यप्रसिद्ध इति श्रावणत्वादेः समान बलत्वाऽसंभवेन कृतकत्वादेः सत्प्रतिपक्षत्वानुपपत्तिरिति भावः

अप्रसिद्धया ज्ञानाऽसंभवेपि साध्याभावव्याप्ये पक्षधर्मताऽऽरोपस्य पक्षधर्मे साध्याभावव्याप्यत्वारोपस्य च संभवाद्दित्याशंकायामित्यर्थः । व्याप्तिविशिष्टपक्षधर्मत्वारोपाऽसंभवाभिधानमिति । विशिष्टस्याऽप्रसिद्धया तद्वैशिष्ट्यस्याऽऽरोपाऽसंभवादिति ग्रन्थेनेत्यादिः । आशयं । अभिप्रायं । पूरयति । प्रकटीकरोति । व्याप्तिविशिष्टस्वविषयकपक्षधर्मताज्ञानत्वादिनेति । आदिना पक्षधर्मताविशिष्टस्वविषयकज्ञानत्वपरिग्रहः । उभयत्र स्वं० हेतुः । अव्याप्यादिप्रतिपक्षस्य । श्रावणत्वादेः । आदिनाऽपक्षधर्मप्रतिपक्षस्य गगनत्वादेः परिग्रहः । व्याप्त्यादिविशिष्टस्वाऽप्रसिद्धेरिति । अपक्षधर्मस्य पक्षधर्मताविशिष्टस्वाप्रसिद्धेरित्यपि बोध्यम् । पूर्वं मूलकारेण "नित्यत्वव्याप्यश्रावणत्वादिवैशि-

विरुद्धादौ साधने स्वव्यापक सामानाधिकरण्यरूपव्याप्तेरप्रसिद्धि-श्चेत्यपि द्रष्टव्यम् ।

व्याप्तिपक्षधर्मत्वोभयज्ञानविषयताया बलत्वे नैषदोष इत्यतो दोषान्तरं स्वयमाह । विरुद्धादाविति । आदिना साधारणपरिग्रहः । साध्याभाववदवृत्तित्वरूपाया व्याप्तेरन्यत्र प्रसिद्धाया विरुद्धादावप्यारोपसंभवात् स्वव्यापकेत्यादि । अप्रसिद्धेश्चेति । तद्ज्ञान घटितसमानबलत्वाऽसंभव इति शेषः । व्याप्तिप्रकारेण पक्षे स्वप्रकारक ज्ञान विवक्षणे सामान्यादौ पक्षे समवायादिरूपहेतुतावच्छेदकसंबन्धेन वृत्तेरप्रसिद्धिर्न क्षतिमावहतीति साऽप्रसिद्धिर्नोक्ता । व्याप्तिघटकानां तादृशपदार्थानां खण्डशः प्रसिद्धानां परस्परोपश्लेषावगाहिज्ञानस्य बलतया विवक्षणेन तद्दोषोद्धारसंभवेपि अन्वयव्यतिरेकव्याप्तिज्ञानयोरननुगमेन एकोपादानेऽन्यत्राव्याप्ति दुर्धरैवेति भावः । साध्यवत्ताज्ञानविरोध्यनुमितिसमर्थत्वेनाऽनुगमे तु सिद्धान्ते एव पर्यवसानम् ।

"व्याप्त्यप्रसिद्ध्या" इतिग्रन्थेन पक्षे व्याप्तिविशिष्टस्ववैशिष्ट्यावगाहिज्ञानमभिप्रेत्य-दूषितम् । इदानीं तु सामानाधिकरण्यसंबन्धेन तदुभयवैशिष्ट्यमभिप्रेत्य दूषितमतो न पौनरुक्त्यमिति ध्येयम् ।

व्याप्तिपक्षधर्मतोभयज्ञानविषयताया इति । व्याप्तिविषयतानिरूपिता या पक्षविषयतानिरूपितहेतुविषयता तस्या इत्यर्थः । एकविशिष्टेऽपरवैशिष्ट्यमिति न्यायेन साध्यतदभावव्याप्तिपक्षधर्मत्वोभयावगाहिलिंगविशेष्यकपरामर्शावेव सर्वत्र सत्प्रतिपक्षौ, तादृशपरामर्शस्यापि प्राचीनमतेऽनुमितिजनकत्वादिति भावः ।

नैष दोष इति । न कृतकत्वादेः सत्प्रतिपक्षत्वानुपपत्तिरूपोदोष इत्यर्थः । दीधितौ—विरुद्धादौसाधने इति । विरुद्धहेताविल्यर्थः । अन्यत्र प्रसिद्धाया इति । केवलान्वयिसाध्यकाऽवृत्तिविरुद्धहेतौ साध्याभाववदवृत्तित्वरूपव्याप्तेरप्रसिद्धावपि सर्वत्र विरुद्धे तादृशव्याप्तेरप्रसिद्धिर्नसंभवतीति ध्येयम् ।

ननुव्याप्तिपक्षधर्मतोभयज्ञानविषयताया बलत्वे सामान्यं नित्यं सामान्यत्वात् सामान्यमनित्यं संयोगेन समवायेन वा द्रव्यादित्यादो सामान्यत्वादेरपि-सत्प्रतिपक्षत्वानुपपत्तिः, सामान्यादिरूपपक्षनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्या समानबलत्वासंभवेन सत्प्रतिपक्षत्वानुपपत्तिसंभवे सा कथं नोक्तेत्यत आह । व्याप्तिप्रकारेणेति । स्वं-हेतुः न क्षतिमावहतीति । समवायेन द्रव्यवत्त्वस्य प्रसिद्धत्वादिति ध्येयम् । परस्परोपश्लेषावगाहि-

नाप्यनिर्धारितविशेषेण बोधितसाध्यविपर्ययकत्वम्, उभयोर-बोधकत्वात्। विशेषश्च न व्याप्तिभंगाभंगरूपः। एकत्र तद्भंग-नियमात्।

अनिर्धारितविशेषेतिमूलम्-अनिर्धारितविशेषसाध्यविरोधिबोधक-लिङ्गकत्वे सति अनिर्धारितविशेषप्रकृतसाध्यबोधकत्वविशिष्टत्वमित्य-र्थकम्बोधकत्वञ्च ज्ञायमानलिंगस्यकरणत्वमते यथाश्रुतमेव। अन्यथा बोधजनकज्ञानविषयपरम् बोधक पदम्। बोधकत्वं च यदि बोधो-पधायकत्वम् तदोभयोरित्यादि। स्वरूपयोग्यत्वञ्चेत्तदा विशेषश्चेति।

व्याप्तिभंगाभंग इतिमूलं व्याप्तिपक्षधर्मताप्रमितिविषयत्व तद्भ्रम-विषयत्वरूप इत्यर्थकम्।

ज्ञानस्येति। निरूप्यनिरूपकभावापन्नविषयताशालिज्ञानस्येत्यर्थः। हेतुविषयता-निरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताऽभावविषयतानिरूपितप्र-तियोगित्वविषयतानिरूपितावच्छेदकत्वविषयतानिरूपिताभावविषयतानिरूपितसाध्य-तावच्छेदकविषयतानिरूपितसाध्यविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्व-विषयताशालिज्ञानस्येति यावत्। तद्दोषोद्धारसंभवेपीति। विरुद्धहेतोः संग्रहेपीत्यर्थः। साध्यवत्ताज्ञानविरोध्यनुमितिसमर्थत्वेनेति। साध्यवत्ता ज्ञानविरोध्यनुमितिजनकतावच्छेदकप्रकारताश्रयत्वेनेत्यर्थः। अनुगमे त्विति। अन्वयव्यतिरेकव्याप्त्योरनुगमेत्वित्यर्थः। सिद्धान्ते एव पर्यवसानमिति। साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिंगत्वं तत्वमिति सिद्धान्तात्।

अपरं सत्प्रतिपक्षलक्षणमाह। अनिर्धारितविशेषेणेति। अनिर्धारित-विशेषकेणेत्यर्थः। तृतीयार्थोवैशिष्टयं साध्यविपर्ययकेन्वेति। साध्यविपर्ययकत्वं च साध्यविरोधिबोधजनक "परामर्श" त्वम्, तादृशपरामर्शविषयोलिंगं यस्येति व्युत्पत्त्या फलितार्थमाह। अनिर्धारितविशेषेति। अनिर्धारितविशेषसाध्य-विरोधिबोधजनकपरामर्शविषयलिंगकत्वे सति अनिर्धारितविशेषसाध्यबोधजनक-परामर्शविषयलिंगत्वम् फलितम्। अन्यथा। लिंगस्य करणत्वानभ्युपगमे। मूले—उभयोरिति। परामर्शयोरित्यर्थः। व्याप्तिभंगाऽभंगरूप इति मूलम्—अत्राऽभंगश्च भंगश्चेति भंगाभंगौ-अल्पाच्त्वाद् भंगस्य पूर्वनिपातः। तेन प्रथमोपात्तस्य भंगस्य पश्चाद् भ्रमविषयत्वरूपार्थकरणेपि न क्षतिः।

ज्ञाननिष्ठविशेषोद्विविधः, प्रमात्वं भ्रमत्वं चेत्यभिप्रायेणाह। प्रमितिविषय-त्वेति। एतच्च स्वरूपकथनमात्रं-ज्ञायमानलिंगस्य करणत्वमते एकत्र व्याप्तिः, अन्यत्र व्याप्त्यभाव इत्यर्थकं व्याप्तिभंगाभंगरूप इति वाक्यम्। न च निर्धारित-

एकत्रतद्भंगेति । तथा चाऽन्यतरत्वेन तद्‌वारणमस्तीति भावः ।

एकतरविषयकव्याप्तिपक्षधर्मताज्ञानस्य भ्रमत्वनियमेपि तदनवधारणेनानिर्धारितविशेषत्वसंभवात् "एकत्रतद्भंगनियमादिति" दूषणमसंगतमित्यत आह । दीधितौ-तथाचेति । तादृशभंगनियमेचेत्यर्थः । तदवधारणं-भंगावधारणम् । अनयोरेकतरं बाध्यं विरुद्धार्थग्राहकत्वादित्यनुमानं सत्प्रतिपक्षतादशायामप्यस्तीतिभाव इत्यर्थः ।

विशेषेति किमर्थमिति वाच्यम् । एकत्र परामर्शेऽ प्रामाण्यनिश्चयसत्वे सत्प्रतिपक्षत्वापत्तेः । एतन्मते चाऽप्रामाण्यज्ञानाभावस्यानुमितौ पृथक् कारणत्वम्, तेन गृहीताऽप्रामाण्यकपरामर्शस्यानुमित्यजनकत्वेनैव वारणादनिर्धारितविशेषेणेत्यस्य वैयर्थ्यमिति शंकानवकाशः । वस्तुतो यथाऽप्रामाण्यज्ञानास्कन्दितपरामर्शदशायां न सत्प्रतिपक्षव्यवहारः तथैकतरपरामर्शधर्मिकप्रामाण्यनिश्चयकालेपि न तद्व्यवहार इत्यतोव्याप्तिपक्षधर्मताप्रमितिविषयत्व-तद्भ्रमविषयत्वान्यतररूपत्वार्थकं व्याप्तिभंगाभंगरूप इत्युक्तम् । अन्यथा तद्भ्रमविषयत्वमात्रोक्तावेव सामंजस्यात्प्रमितिविषयत्वोपादानवैयर्थ्यप्रसंगात् । तथा चैकत्र प्रमात्वनिश्चयेऽधिकबलता, भ्रमत्वज्ञाने च न्यूनबलतेति तत्र तत्र सत्प्रतिपक्षितत्ववारणाय प्रमाभ्रमत्वयोरुपादानम् । यद्यपि तादृशान्यतररूपस्य विशेषपदार्थत्वे उभयहेतौ व्याप्तिपक्षधर्मताप्रमितिविषयत्वावधारणे सत्प्रतिपक्षव्यवहारस्येष्टतया तदनुपपत्तिः तत्रानिर्धारितविशेषत्वासंभवात् तथापि एकतरहेतुधर्मिकव्याप्तिपक्षधर्मतावधारणाभावविशिष्टं यदपरहेतुधर्मिकव्याप्तिपक्षधर्मतावधारणं तदभावोनिवेश्यः । वस्तुतस्तु "एकत्रतद्भंगनियमादि" तिमूलेनैव उभयहेतौ व्याप्तिपक्षधर्मताप्रमितिविषयत्वावधारणस्य न संभव इति ध्येयम् ।

मूले—एकत्र तद्भंगनियमादिति एकत्र-हेतौ व्याप्तिपक्षधर्मताभ्रमविषयत्वनियमादित्यर्थः । एकत्र परामर्शे भ्रमत्वनियमादिति यावत् । तथा चाऽनिर्धारितविशेषत्वाभावादसंभव इति भावः । नन्वत्राऽभंगनियमादित्येव कथं नोक्तं, अभंगस्य प्रथमोपस्थितत्वादिति चेत्-सत्यम् । अभंगश्च व्याप्तिप्रकारकप्रमाविषयत्वं-तथा च वन्हिव्याप्यघटवान् पर्वतः-वन्ह्यभावव्याप्यजलवान् पर्वत इति सत्प्रतिपक्षस्थलेऽभंगविरहेण सर्वत्र तादृशनियमाऽसंभवात् । तद्भंगावधारणन्तु सर्वत्रैव संभवतीति तदेवोक्तमिति भावः ।

एकतरविषयकेति व्याप्तिपक्षधर्मताविषयकेत्यर्थः । भ्रमत्वनियमेपीति । एकत्र व्याप्त्यभावसत्वेऽपीति यावत् । तदनवधारणेनेति । भ्रमत्वानव-

यद्यप्यनयोरेकतरमित्यादेः एकत्र पक्षे साध्यतदभावव्याप्यतया हेतुद्वयज्ञानान्यतरद् भ्रमः एकत्रमिथोविरुद्धद्वयसाधकद्वयान्यतरत्वादित्यर्थो न साधुः, सद्धेतुपरामर्शेऽप्यतरत्वरूपहेतुसत्त्वेन भ्रमत्वस्य चाऽभावेन व्यभिचारात् । न चैकपक्षकहेतु-

धारणेनेत्यर्थः । अनिर्धारितविशेषत्वसंभवादिति । सत्प्रतिपक्षत्वमक्षतमेवेति शेषः । तथा च नाऽसंभव इति भावः ।

साध्यानुमितिजनकीभूतपरामर्शविशिष्टेन साध्याभावानुमितिजनकीभूतपरामर्शेन विशिष्टं यत्साध्यानुमितिप्रयोजकं साधनं तत्वं सत्प्रतिपक्षत्वम्, तत्रानिर्धारित विशेषेत्यनेन परामर्शद्वयेऽप्रामाण्यज्ञानानास्कन्दितत्वं लभ्यते-तथा चाऽप्रामाण्यज्ञानानास्कन्दिततत्कालीनविरोधिपरामर्शविशिष्टो यस्तत्कालीनप्रकृतसाध्यानुमितजनकाऽप्रामाण्यग्रहानास्कन्दितविशिष्टपरामर्शः विषयतया तद्वान् हेतुः सत्प्रतिपक्षः । तत्र चोभयोरबोधकत्वादिति दूषणंदत्तम्, विशेषश्च न व्याप्तिभंगाभंगरूप एकत्रतद्भंगनियमात् इतिदूषणान्तरं दत्तम् व्याप्तिभंगाभंगरूपः-साध्यव्याप्याभाववद्विशेष्यकत्वरूप इति यावत् । एकत्र तद्भंगनियमादिति—साध्यव्याप्यवत्तापरामर्शसाध्याभावव्याप्यवत्तापरामर्शयोरन्यतरस्मिन् भ्रमत्वनियमादित्यर्थः । तथा च भ्रमत्वग्रहानास्कन्दितत्वमेवाऽभंगत्वमितिभावः । ननु भ्रमत्वसत्वेपि तदवधारणस्यानावश्यकत्वमिति कथं मूलग्रन्थसंगतिरतोदीधितिकारस्तस्य भावार्थमाह । तथा चेति । तथा चानयोरेकतरंवाध्यंविरुद्धार्थग्राहकत्वादित्यादिना भ्रमत्वावधारणं सत्प्रतिपक्षतादशायामस्त्येवेति समुदितार्थः ।

अनयोः-परामर्शयोः । एकतरं-अन्यतरत् । वाध्यं-भ्रमः । विरुद्धार्थयोः-साध्यतदभावयोः । योग्रहः-अनुमितिः । तज्जनकत्वादित्यर्थः । तत्राशंकते । यद्यपीति । अनयोरेकतरमित्यादेः-अनयोरेकतरं वाध्यं विरुद्धार्थग्राहकत्वादित्यस्ये त्यर्थः । विभिन्नधर्मिकसाध्यतदभावव्याप्यवत्ताने एकत्र केवलहेतुद्वयज्ञाने च पंक्षान्तर्गते तादृशहेत्वभावाद्भागासिद्धिरतः एकत्र पक्षे इति साध्यतदभावव्याप्यतयेति च पक्षांशेउपात्तम् । हेतुद्वयज्ञानान्यतरदित्यन्तं पक्षनिर्देशः । भ्रमत्वं साध्यम् । विभिन्नधर्मिकतादृशज्ञानमादाय व्यभिचारवारणाय हेतौ एकत्रेति । एकधर्मिकेतितदर्थः । कपिसंयोगतदभावव्याप्यवत्ताज्ञाने व्यभिचार वारणाय विरुद्धेति । न साधुरिति । वन्हिव्याप्यधूमवान् पर्वतः वन्ह्यभावव्याप्यजलवान् पर्वत इति परामर्शान्यतरद् भ्रमः एकधर्मिकविरुद्धद्वयसाधकद्वयान्यतरत्वादित्यनुमानं न साध्वित्यर्थः । तत्र हेतुः—व्यभिचारादिति । व्यभिचारमाह । सद्धेतुपरामर्शे इति । वन्हिव्याप्यधूमवान्पर्वतइतिपरामर्शे

प्रतिहेतुपरामर्शद्वयान्यतरत्वं पक्षीकृत्य विरोधिसाधकद्वयवृत्तित्वेन भ्रमवृत्तित्वमेवानुमेयम्, तादृशान्यतरत्वाश्रये एकत्र भ्रमत्वसत्त्वेनैव तत्र भ्रमवृत्तित्वसत्वान्न व्यभिचारप्रसक्तिरितिवाच्यम्। तथासत्यपि घटादिविषयकोयत्र समूहालम्बनरूपोविरोधिपरामर्शः तत्र घटाद्यंशे भ्रमत्वमादायार्थान्तरवारणाय तत्तद्धेतौ तत्तत्साध्यव्याप्तिपक्षधर्मतान्यतरभ्रमस्य निवेशनीयतया तत्तद्धेतुद्वयान्तर्गतसद्धेतौ तत्तत्साध्यव्याप्त्यादिभ्रमाप्रसिध्या साध्याप्रसिद्धेः, तत्तद्धेतुद्वयान्यतरांशे तत्तत्साध्यव्याप्तिपक्षधर्मतान्यतरभ्रमवृत्तित्वसाधने च विरुद्धार्थसाधकान्यहेतुकपरामर्शद्वयान्यतरत्वे व्यभिचारः,

इत्यर्थः। न चेति भ्रमवृत्तित्वमेवेति। तथा च तादृशपरामर्शद्वयान्यतरत्वं भ्रमवृत्ति विरोधिसाधकपरामर्शद्वयवृत्तित्वादित्यनुमानं फलितम्। उक्तव्यभिचारं निराकरोति। तादृशान्यतरत्वाश्रये इति। एकधर्मिकहेतुप्रतिहेतुपरामर्शद्वयान्यतरत्वाश्रये इत्यर्थः। एतेन हेतुसत्वंसूचितं। एकत्र। प्रतिहेतुपरामर्शे। तत्र। तादृशान्यतरत्वे। भ्रमवृत्तित्वसत्वादिति। अनेन साध्यसत्वं सूचितम्। तथासत्यपीति। उक्तव्यभिचारवारणेपीत्यर्थः। विरोधिपरामर्शे इति। वन्ह्यभावव्याप्यजलवान्पर्वतोघटवांश्चेति परामर्श इत्यर्थः। अर्थान्तरवारणायेति। असंबद्धार्थाभिधानवारणायेत्यर्थः। प्रतिहेतौ "साध्याभावरूप"-साध्यव्याप्ति-पक्षधर्मत्वभ्रमविरहेपि भ्रमत्वसिद्धाविति यावत्।

तत्तद्धेताविति। तत्तद्धेतुधर्मिकेत्यर्थः। हेतुप्रतिहेतुधर्मिकेतियावत्। तत्तत्साध्यव्याप्ति-पक्षधर्मतान्यतरभ्रमस्य। साध्य-साध्याभावव्याप्ति-पक्षधर्मतान्यतरविषयकभ्रमस्य। भ्रमपदेनेतिशेषः। निवेशनीयतयेति। तथा च हेतुप्रतिहेतुधर्मिकसाध्य-साध्याभावव्याप्तिपक्षधर्मतान्यतरविषययकभ्रमवृत्तित्वं साध्यं फलितम्। सद्धेतौ। धूमे। साध्याप्रसिद्धेरिति। तादृशभ्रमवृत्तित्वरूपसाध्याप्रसिद्धेरित्यर्थः। भ्रमवृत्तित्वसाधनेचेति। एकपक्षकहेतुप्रतिहेतु परामर्शद्वयान्यतरत्वं तत्तद्धेतुद्वयान्यतरांशे तत्तत्साध्यव्याप्तिपक्षधर्मतान्यतरभ्रमवृत्तित्वसाधने चेत्यर्थः। अन्यतरधर्मिकतादृशभ्रमवृत्तित्वस्य प्रसिध्या न साध्याप्रसिद्धिरिति भावः :

नन्वत्र प्रतिहेतौ प्रकृतसाध्यव्याप्तिभ्रममादायाऽर्थान्तरापत्तिस्तदवस्थैवेति चेन्न। प्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यव्याप्तिप्रकारत्व प्रकृतहेतुतावच्छेदकावच्छिन्नविशेप्यतानिरूपितपक्षधर्मप्रकारत्व प्रतिहेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्याभावव्याप्तिप्रकारत्व, तादृशपक्षधर्मप्रकारत्वैतदन्यतमनिरूपकभ्रमवृत्तित्वस्य साध्यत्वाअर्थान्तरमदोषः इष्टत्वम् यद्यपि

साध्यप्रसिद्धिमात्रेण कृतकृत्यता च। तथापि तत्तत्साध्यतदभावव्याप्त्यवच्छिन्नपक्षविषयतानिरूपितहेतुविषयताद्वयान्यतरत्वं पक्षीकृत्य भ्रमत्वनियतविषयतावृत्तित्वम् एकधर्मिकविरुद्धानुमितिजनकतावच्छेदकविषयताद्वयवृत्तित्वेन साधनीयम्।

सामान्यतोविरोधिसाधकद्वयवृत्तित्वस्य हेतुत्वे व्यभिचारमाह। विरुद्धार्थसाधकेति। वह्नि-वन्ह्यभावसाधकेत्यर्थः। अन्यहेतुकपरामर्शद्वयान्यतरत्वे। वह्नितदभावसाध्यकाऽऽलोकह्रदत्वोभयविषयकपरामर्शद्वयान्यतरत्वे। व्यभिचार इति। तत्तद्धेतुपदेन धूमपाषाणमयत्वोभयमुपादाय तत्तद्धेतुद्वयान्यतरांशे तत्तत्साध्यव्याप्तिपक्षधर्मतान्यतरविषयकभ्रमवृत्तित्वरूपसाध्यस्य उक्तोभयविषयकपरामर्शद्वयान्यतरत्वे विरहादिति भावः। एवं तत्तद्धेतुद्वयपदेन कृतकत्वश्रावणत्वयोरुपादने नित्यत्वानित्यत्वसाधकचाक्षुषत्वकृतकत्वद्वयविषयकपरामर्शद्वयान्यतरत्वे व्यभिचारोबोध्यः। विरोधिसाधकद्वयवृत्तित्वं यदि साध्यव्याप्यहेतुमान्पक्षः-साध्याभावव्याप्यहेतुमान्पक्षः एतद्द्वयवृत्तित्वरूपं तदा न व्यभिचारोऽतो दोषान्तरमाह। साध्यप्रसिद्धिमात्रेणेवेति। साध्यकुक्षिनिविष्टभ्रमत्वेन परामर्शस्य भ्रमत्वलाभादनुमानवैयर्थ्यमितिभावः। तथापीति। तत्तत्साध्येति। तथा च पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यत्वावच्छिन्नविषयता, पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवन्ह्यभावव्याप्यत्वावच्छिन्नविषयताद्वयवृत्तिअन्यतरत्वमित्यर्थः। भ्रमत्वनियतविषयतावृत्तित्वमिति। अस्य साधनीयमित्यनेनान्वयः। अत्र भ्रमत्वघटकेत्यनुक्त्वा भ्रमत्वनियतेत्युपादानाद् या विषयता भ्रमत्वव्याप्यत्वेन गृहीता तद्वत्तापरामर्शात्पश्चादेव भ्रमत्वानुमितिरिति न साध्यप्रसिद्धिमात्रेण कृतकृत्यतेति ध्येयम्। तथा च तादृशान्यतरत्वे भ्रमत्वनियतविषयतावृत्तित्वसिद्धौ परामर्शयोरन्यतरांशे भ्रमत्वसिद्धिरिति भावः।

नचाऽत्र काञ्चनमयधूमादिहेतुकस्थले कांचनमयत्वघटितभ्रमत्वमादाय—पुनरर्थान्तरग्रस्तता तदवस्थेति वाच्यम्। भ्रमत्वनियतविषयतावृत्तित्वपदेन भ्रमत्वनिरूपकत्वे सति भ्रमत्वनियता या विषयता तद्वृत्तित्वस्य विवक्षितत्वात्। कांचनमयत्वघटितभ्रमत्वनिरूपकविषयतावृत्तित्वस्य तादृशविषयताद्वयान्यतरत्वरूपपक्षेऽसत्वान्नार्थान्तरग्रस्ततेति ध्येयम्।

तथा च पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यत्वावच्छिन्नविषयता. पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवन्ह्यभावव्याप्यत्वावच्छिन्नविषयताद्वयवृत्तिअन्यतरत्व भ्रमत्वनिरूपकत्वे सति भ्रमत्वनियता विषयता तद्वृत्तीतिफलितम्। तत्र हेतुमाह। एकधर्मिकेति। इदं च वह्निव्याप्य धूमवान् पर्वतः, वन्ह्यभावव्याप्यवान् इति परामर्शद्वयविषयताया व्यभिचारवारणाय

वन्हिव्याप्यधूमवान्, इन्धनव्याप्यालोकवान्, शैवालाभावव्याप्यालोकवान्वा-पर्वत इत्यादिपरामर्शद्वयविषयतामादाय व्यभिचारवारणाय विरुद्धेति। विपरीतेत्यर्थः।

ननु विरुद्धत्वस्याऽसामानाधिकरण्यरूपस्य विषयगर्भतया सामान्यतोविरुद्धत्वाऽप्रसिद्धिः। न च तावत्पदार्थविरुद्धत्वमेव निवेशनीयमिति वाच्यम्। तस्य गगनादावेव सत्वेन साधनाप्रसिद्धेः। यदि चोदासीनपदार्थगर्भविरुद्धत्वं निवेश्यते तदा स्वरूपासिद्धिः। यदि च साध्यतदभावद्वयगर्भमेव विरुद्धत्वं निवेश्यते तदा दृष्टान्तासिद्धिः। किं चैकधर्मिकविरुद्धद्वयानुमितिजनकतावच्छेदकप्रकारताद्वयवृत्तित्वं पर्वतोवन्हिमान्धूमात्. पर्वतोवन्ह्यभाववान्जलादित्यत्र एकधर्मिकविरुद्धद्वयानुमिति-जनकतावच्छेकीभूता या वन्हिव्याप्तिप्रकारतानिरूपितधूमनिष्ठप्रकारता. एवंवन्ह्य-भावव्याप्तिप्रकारतानिरूपितजलनिष्ठप्रकारता. एतद्द्वयवृत्तिअन्यतरत्वे वर्त्तते तत्र च भ्रमत्वनियतविषयतावृत्तित्वंनास्तीति व्यभिचारः। न च पक्षनिष्ठविषयता-निरूपितत्वं तादृशविषयतायां निवेशनीयमिति वाच्यम्। तथा सति पक्षनिवेशेना-ननुगमेन पूर्वोक्तदृष्टान्तासिद्ध्यादीनां दुर्वारतापत्तेः। किं च एकधर्मिकविरुद्धद्वया-नुमितिनिष्ठजन्यतानिरूपितजनकत्वं यदिनिवेश्यते तदा समूहालंवनानुमितिनिष्ठजन्य-तातिरूपितजनकतामादाय घटव्याप्यवान् पटव्याप्यवानिति ज्ञानीयप्रकारताद्वयवृत्ति-अन्यतरत्वे हेतुसत्वातत्र च साध्यविरहेण व्यभिचारः, एकधर्मिकविरुद्धद्वयानुमिति-त्वव्यापकजन्यतानिरूपिजनकतानिवेश्यते तदाऽप्रसिद्धिः, एकधर्मिकविरुद्धद्वयानु-मितित्वस्य घटघटाभावन्हितदभावानुमित्यादिसाधारणतया तादृशानुमितित्वव्यापक-जन्यत्वस्याऽप्रसिद्धत्वादितिचेन्न।

तदनुमितिजनकतावच्छेदकविषयतावृत्तित्वे सति तदनुमित्युद्देश्यतावच्छेदक-धर्मावच्छिन्नोद्देश्यतानिरूपिततदनुमितिविधेयतावच्छेदकावच्छिन्नविरुद्धविधेयताका नुमितिजनकतावच्छेदकविषयतावृत्तित्वस्य हेतुत्वान्न दोपः। तथा च प्रकारताविशिष्टत्वं समुदितार्थः। वै० स्वावच्छेदकावच्छिन्नविषयताशाल्यनुमितित्व-घटित-धर्मावच्छिन्नजन्यतादिरूपितजनकतावच्छेदकविपयतावृत्तित्व स्वनिरूपितविशे-ष्यत्वाभिन्नविशेष्यतानिरूपितस्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदक-विपयताशाल्यनुमितित्वघटितधर्मावछिन्नजन्यतानिरूपितजनकतावच्छेदकविपयता — वृत्तित्वोभयसं०। स्वं— प्रकारता।

किंचिद्धर्मावच्छिन्न विशेष्यताविशिष्टविषयितावृत्तित्वस्य हेतुत्वम्। वै० स्वनिरूपितविधेयता विशिष्टत्व सं०। विधेयतावै० स्वविशिष्टानुमितित्वावच्छिन्न-जन्यतानिरूपितजनकतावच्छेदकत्वस्वविशिष्टविधेयताशाल्यनुमितित्वावच्छिन्नजन्यता-निरूपितजनकतावच्छेदकत्वोभयसं०। स्वं- विधेयता। अनुमितौ ... स्ववै०

( भ्रमत्वं चानुगतं कथंचिन्निर्वचनीम् इतिसत्प्रतिपक्षपूर्वपक्षः ।
उच्यते इत्यादिग्रन्थस्य दोषनिर्वचनपरत्वं न संभवति, साध्यविरोध्युपस्थापनेत्यादेर्ज्ञानस्य ग्राह्याभावाद्यनवगाहितयाऽनुमित्यप्रतिबन्धनिरूपकत्वसं० । विधेयतायां स्ववै० स्वनिरूपितोद्देश्यतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितत्व-स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसंबन्धेनेत्यस्मद्गुरुचरणाः ।

/ ननु भ्रमत्वस्य विषयतागर्भत्वेनोदासीनविषयतानिवेशे ऽर्थान्तरतादवस्थ्यम् बाधश्च । न च हेतुप्रतिहेतुद्वयघटिताऽप्रामाण्यं निवेशनीयम्, तथा च वन्ह्यभावव्याप्यत्वाभाववत्तिपापाणमयत्वे वन्ह्यभावव्याप्यत्वप्रकारकज्ञानत्वरूपभ्रमत्वनिवेशे नोक्तदोष इतिवाच्यम् । तथा सति दृष्टान्तासिद्धितादवस्थ्यमित्यतआह । भ्रमत्वं चेति । अनुगतमिति । विशेष्यताविशिष्टप्रकारताकत्वमनुगतभ्रमत्वम् । वै० स्वनिरूपितत्व स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्वोभयसं० । निरूपकतावत्ता च प्रसिद्धचतुष्टयसं० । प्रतिपदव्यावृत्तिःस्वयमूहनीया ।

स्वाश्रयप्रतियोगिनिष्ठत्व, स्वाश्रयानुयोगिनिष्ठविशेष्यतानिरूपितत्व, स्वनिरूपितत्वैतत्त्रितयसंबन्धेन संसर्गताविशिष्टान्यप्रकारताशालित्वं चानुगतंभ्रमत्वम् । ननु परंपरासंबन्धेन प्रमास्थलेऽतिव्याप्तिः । तथाहि-यत्र स्वसमवायिसंयोगेन वन्हित्वप्रकारकप्रमा तत्र स्वपदेन यदि समवायनिष्ठसांसर्गिकविषयता उपादीयते तदा स्वाश्रयप्रतियोगिनिष्ठत्व स्वनिरूपितत्वयोःसत्वेपि स्वाश्रयानुयोगिनिष्ठविशेष्यतानिरूपितत्वं नास्तीति चेद्-अत्रोच्यते-स्वनिरूपितत्व-स्वाश्रयप्रतियोगिनिष्ठत्व स्वनिरूपकीभूतप्रकारतानिरूपितस्वप्रकारत्वानिरूपितसांसर्गिकविषयताश्रयानुयोगिनिष्ठविशेष्यतानिरूपितत्वैतत्त्रितयसंबन्धेन सांसर्गिकविषयतावैशिष्ट्यं निवेशनीयमिति न कोपि दोषः ।

ईदृशपरंपरायाः संसर्गत्वानुपगमेत्वाह । कथंचिदिति । न च तथापि नित्यज्ञानावृत्तिविषयितावत्वं तदितिवाच्यम् । नित्यज्ञाने विशिष्टविषयितानभ्युपगमे समानाकारकज्ञानीयविषयिताया एकत्वानुपगमे वा उक्तपरिष्काराऽसंभवादितिध्येयम् ।

## इतिसत्प्रतिपक्षपूर्वपक्षः

उच्यते इत्यादिग्रन्थस्येति । साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थितया प्रतिरुद्धकार्यकलिंगत्वं तत्वमिति ग्रन्थस्येत्यर्थः । दोषनिर्वचनपरत्वमिति । सत्प्रतिपक्षदोषनिरूपणपरत्वमित्यर्थः । असंभवे हेतुमाह । साध्यविरोध्युपस्थापनादेर्ज्ञानस्येति । साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिंगत्वमिति ज्ञानस्येत्यर्थः । ग्राह्याभावाद्यनवगाहितयेति । साध्या-

सत्प्रतिपक्षितव्यवहारोहि सत्यसति वा साधने, नाऽपरामृष्यमाणे, नाप्यविद्यमानविरोधिपरामर्शे ।

कतया तस्य हेत्वाभासत्वाऽसंभवादिति सत्प्रतिपक्षव्यवहारविषय-निर्वचनपरतया व्याख्यातुकामोऽव्यवहारविषयमवधारयति । सत्प्रति-पक्षितेति ।

सत्यसति चेति । समीचीनेऽसमीचीनेचेत्यर्थः । तथा च सद्धेतौ उक्तलक्षणस्य दशाविशेषेऽतिप्रसंगो न दूषणावह इति भावः । अपरा-मृष्यमाणे इति । प्रकृतसाध्यसिद्धयौपयिकस्वविषयकपरामर्शदशान-वच्छिन्ने इत्यर्थः । एतेन साध्यसिद्धयौपयिकपरामर्शकालीनत्वरूपस-मानत्वनिवेशसार्थक्यं दर्शितम् । "असति गृहीताऽप्रामाण्यके वा सत्प्रतिपक्षव्यवहारविरहादि" त्यग्रिमग्रन्थस्तु असतीत्यस्यदृष्टान्त-विधया प्रदर्शनेनाऽगृहीताप्रामाण्यकत्वांशमात्रव्यावृत्तिप्रदर्शनपर इति न पौनरुक्त्यम् । अविद्यमानविरोधिपरामर्शे इति । विरोध्यनुमिति-योग्यपरामर्शदशानवच्छिन्न इत्यर्थः । एतेन समानबलोपस्थिति-प्रतिरुद्धकार्यकत्वांशनिवेशप्रयोजनमुपदर्शितम् ।

भावाद्यनवगाहितयेत्यर्थः । आदिना साध्याभावव्याप्यानवगाहियेत्यस्य संग्रहः । तस्य । साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिंगत्वस्य । हेत्वाभासत्वासंभवादिति । अनुमितिविरोधिज्ञानविषयस्यैव हेत्वा भासत्वादिति भावः । वस्तुतः साध्याभावव्याप्यवत्पक्षस्य सत्प्रतिपक्षतया स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्वसंबन्धेनतद्वतोहेतोर्दुष्टतया साध्यविरोध्युपस्था-पनसमर्थत्वस्यैव सम्यक्त्वे शेषस्य "समानबलोपस्थित्या प्रतिरुद्धकार्यकलिंगत्व-मित्यस्य" वैयर्थ्यप्रसङ्गात् । तथाहि साध्यविरोध्युपस्थापनसमर्थत्वं साध्यविरोध्यु-पस्थितियोग्यता-सा च व्याप्तिः पक्षधर्मता च तद्विशिष्टस्य दोषत्वात् । इत्यतआह दीधितौ सत्प्रतिपक्षितेतीति युक्तं प्रतिभाति ।

समीचीने । सद्धेतौ । असमीचीने । असद्धेतौ । उक्तलक्षणस्य व्यवहारौपयिकलक्षणस्य । दशाविशेषे । परामर्शद्वयसंवलनकाले । अति-प्रसंग इति लक्ष्यतयेत्यादि । स्वविषयकेति । स्वं हेतुः । एतेन । सत्प्रति-पक्षव्यवहारविरहेण । एतेन । विरोधिपरामर्शाऽसत्वे सत्प्रतिपक्ष-व्यवहारविरहेण । सत्प्रतिपक्षत्वादिति । सत्प्रदिपक्षव्यवहारादित्यर्थः । परामर्शपरतामाहेति । तथा चाऽतीतानागतहेतुकस्थले हेतोरसत्वेपि तद्धेतुविषयकपरामर्शोऽस्त्येवेति भावः । परामृष्यमाणस्येति । एतेन यस्येत्यनेन केवलहेतुबोधने तस्याऽपरामृष्यतादशायामपि सत्प्रति-

उच्यते। साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिंगत्वं तत्वम्। बलं च व्याप्तिपक्षधर्मते।

अत एव सत्प्रतिपक्षो-विरोधिव्याप्त्यादिमत्तया परामृष्यमाणोहेतुः विरोधिपरामर्शो वा यस्य परामृष्यमाणस्य हेतोरसौ सत्प्रतिपक्ष इति विग्रहमपि वर्णयन्ति अतस्तदनुसारेणैव व्यवहारोपयिकलक्षणमाह। साध्येति। बाधाश्रयाऽसिद्धिनिर्णयवारणायसमर्थान्तम्। न चासौ न व्याप्तिपक्षधर्म-

अतएवेति। प्रकृतपरामर्शस्य विरोधिपरामर्शस्य चाऽसत्वदशायां सत्प्रतिपक्षव्यवहारविरहादेवेत्यर्थः। अतीतानागतप्रतिहेतुपरामर्शदशायामपि सत्प्रतिपक्षत्वात् प्रतिपक्षपदस्यहेतुपरतापक्षं परित्यज्य परामर्शपरतामाह। विरोधिपरामर्शोवेति। परामृष्यमाणस्येति। यद्यप्यन्यपदार्थपरामृष्यमाणत्वं न शब्दतो लभ्यते-तथापि प्रतिपक्षपदस्यैव फलोन्मुखस्वकार्यप्रतिरोधकपरतया परामृष्यमाणस्वकार्यानुमितिविरोधिपरामर्शपरत्वात्-फलितार्थविवरणमिदम्। तदनुसारेण। तादृशव्यवहारानुसारेण।

पक्षितत्वापत्तिरिति निरस्तम्। स्वकार्येति। स्वं-हेतुः। तादृशव्यवहारानुसारेणेति। तादृशविग्रहानुसारेणेति तु सम्यक्। साध्यविरोध्युपस्थापनेत्यादिमूलम्। साध्यो वह्निः तद्विरोधी- वन्ह्यभाववत्पर्वतरूपोबाधः तद्विषयकोपस्थितिः वन्ह्यभाववान्पर्वत इत्याकारिका तज्जनिका या उपस्थितिः वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इत्याकारिका। तत्प्रतिरुद्धकार्यकलिंगत्वस्य धूमे सत्वाल्लक्षणसमन्वयः। तद्दशायामिति। बाधाश्रयासिद्धिनिश्चयदशायामित्यर्थः। अतिव्याप्तिवारणायेति। काञ्चनमयह्रदो न वन्हिमानिति बाधनिश्चयेन काञ्चनमयत्वाभाववान् ह्रद इत्याश्रयासिद्धिनिश्चयेन वा प्रतिरुद्धानुमितिकार्यके "वन्हिव्याप्यधूमवान्कांचनमय ह्रद इति परामर्शविषये धूमादावतिव्याप्तिवारणायेत्यर्थः। तयोरपि। बाधाश्रयासिद्धिनिश्चययोरपि। दीधितौ-समर्थान्तमिति। तथा च बाधनिश्चयस्य आश्रयासिद्धिनिश्चयस्य वा साध्यविरोध्युपस्थितिजनकत्वाभावान्नातिव्याप्तिरिति भावः। आश्रयासिद्धिनिर्णयस्येति। बाधनिश्चयानन्तरं परामर्शसंभवाद् बाधपरित्यागः। तत्समवधानं। आश्रयासिद्धिनिश्चयसमवधानम्। तत्संभवात्। परामर्शसंभवात्। अलौकिकज्ञानात्मकाश्रयासिद्धेरनुमितिप्रतिबन्धकत्वेपि लौकिकपरामर्शाऽविरोधित्वं बोध्यम्। साध्याप्रसिद्धेरप्युपलक्षकमिति। काञ्चनमयत्वाभाववान्वन्हिरिति साध्याप्रसिद्धिनिश्चयेनापि प्रतिरुद्धानुमितिकार्यके काञ्चनवन्हिव्याप्यधूमवान्ह्रद इति

तात्मकबलोपस्थितिरिति वाच्यम्। व्याप्तिपक्षताविरहस्य साध्यत्वे पक्षतावच्छेदकत्वे वा तत्संभवात्।

बाधाश्रयासिद्धीति। निर्णयवारणायेति। तद्दशायामतिव्याप्तिवारणायेत्यर्थः। तयोरपिसाक्षादनुमितिप्रतिरोधकत्वादितिभावः। न चाश्रयासिद्धिनिर्णयस्याऽनुमितिप्रतिबन्धकत्वेपि तस्य परामर्शेणापि समं विरोधात्परामर्शकाले तत्समवधानं दुर्घटमिति वाच्यम्। लौकिकसन्निकर्षादेव तत्संभवात्। आश्रयासिद्धिपदं साध्याप्रसिद्धेरप्युपलक्षकम्। बलपदेनैव तद्वारणात्समर्थान्तविशेषणं व्यर्थमिति शंकां निराकरोति। न चासावित्यादिना। असौ बाधादिनिश्चयः। व्याप्तीति। धूमोवह्निव्याप्तिविशिष्टपर्वतवृत्तित्वाभाववान् पर्वताद्यवृत्तित्वात् तादृशाभाववान्धूमोगुणवान् द्रव्यत्वादित्यादौ धूमादौ वन्ह्यादिव्याप्तिविशिष्टपक्षधर्मतानिश्चयरूपबाधाश्रयासिद्धिनिर्णयस्य व्याप्तिपक्षधर्मतात्मकबलोपस्थितित्वसंभवादिति भावः।

परामर्शविषये धूमादावतिव्याप्तिरिति भावः तद्वारणादिति। बाधाश्रयासिद्धिवारणादित्यर्थः। बाधाश्रयासिद्धिसाध्याप्रसिद्धीनां व्याप्तिपक्षधर्मतानात्मकतयावलरूपत्वाभावादिति भावः। बाधादिनिर्णय इति। आदिना आश्रयासिद्धिसाध्याप्रसिद्धयोः संग्रहः। वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वाभाववानिति। अत्र बाधस्य व्याप्तिपक्षधर्मतात्मकतया बलरूपत्वमपि बोध्यम्। तादृशाभाववानिति। वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वाभाववानित्यर्थः। अत्र वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वरूपाऽऽश्रयासिद्धेर्व्याप्तिपक्षधर्मतात्मकतया बलरूपत्वं बोध्यम्। तदेवाह। वन्ह्यादिव्याप्तिविशिष्टेत्यादिना। एवं च समर्थान्तानुपादाने वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वाभावाभाववान् धूम इति बाधनिश्चयेन "बलोपस्थित्यात्मकेन" प्रतिरुद्धानुमितिकार्यके- [illegible]व्याप्तिविशिष्टपर्वतवृत्तित्वाभावव्याप्यपर्वताद्यवृत्तित्ववान् धूमः इति परामर्श[illegible] पर्वताद्यवृत्तित्वे, एवं वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वाभावाभाववान् धूमः इति आश्रयासिद्धिनिश्चयेन "बलोपस्थित्यात्मकेन" प्रतिरुद्धानुमितिकार्यके गुणव्याप्यद्रव्यत्ववान् वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वाभाववान् धूमः इति परामर्शविषये द्रव्यत्वे चातिव्याप्तिरिति भावः। बलपदस्य प्रकृतसाध्याभावव्याप्तिविशिष्टप्रकृतपक्षधर्मतापरतया नोक्तातिव्याप्तिः इति समर्थान्तविशेषणवैयर्थ्यमित्याशंकते। नन्विति। नायं दोष इति। बाधाश्रयासिद्धिनिश्चयदशायां पर्वताद्यवृत्तित्वद्रव्यत्वहेतावतिव्याप्तिरूपो दोषो नेत्यर्थः। प्रकृते। धूमोवन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वाभाववान पर्वताद्यवृत्तित्वादित्यत्र। तादृशाभाववान् धूमोगुणवान् द्रव्यत्वादित्यत्र च: वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वाभावाभावव्याप्ति-

दी०—पक्षः साध्याभावव्याप्यवान् साध्यं पक्षवृत्तित्वाभावव्याप्यवदिति पक्षस्य व्यापकभेदेन च अन्वयव्यतिरेकभेदेन च व्याप्तेश्च भिन्नत्वादेकोपादानेऽन्यासंग्रहेण वलस्याऽविवक्षितत्वाच्च। साध्यधीविरोध्यनुमितिजनकज्ञानविषयत्वेन तदुपादाय तदुपस्थित्यभिधानं च शिरोवेष्टनेन नासिकास्पर्शमनुधावति। साध्यस्य-साध्यसिद्धे

ननु वलपदं प्रकृतसाध्याभावव्याप्तिविशिष्टप्रकृतपक्षधर्मतापरमिति नायं दोषः। प्रकृते वन्हिव्याप्तिविशिष्टपर्वतवृत्तित्वव्याप्तिविशिष्टधूमवृत्तित्ताया वलत्वादित्यत आह। पक्ष इति। इतीत्यस्य प्रतिरोधकज्ञानविषयस्येति शेषः। पक्षस्य व्याप्तेश्च भिन्नत्वादित्यन्वयः। प्रथमे प्रकृतपक्षस्य द्वितीये प्रकृतसाध्यस्य पक्षतया पक्षभेदः। व्याप्तेर्भेदकद्वयमाह। व्यापकेत्यादि। व्यापकभेदेनेति। व्यापकयोः। साध्याभावपक्षवृत्तित्वाभावयोर्भेदेनेत्यर्थः। अन्वयव्यतिरेकभेदेनेति। एकसाध्यगमकव्याप्तेरप्यन्वयव्यतिरेकरूपनिरूपकभेदेनेत्यर्थः। अविवक्षितत्वात्। विवक्षितुमशक्यत्वात्। नन्वनुगतरूपेण दर्शितसकलव्याप्तिपक्षधर्मतानिवेशे नायं दोष इत्यत आह। साध्येति। शिरोवेष्टनेनेति। तादृशानुमितिजनकज्ञानत्वेन प्रतिरोधकज्ञानस्यैव निवेशात्तद्विषयविषयकत्वेन पुनस्तन्निवेशोऽनुचित इत्यर्थः। तथा च विरोध्युपस्थापनसमर्थत्वेनैवोपस्थितिनिवेशोयुक्त इति भावः। उपस्थितेर्विरोधित्वं-प्रतिवन्धकत्वं, तच्च न साध्यनिरूपितमिति साध्यपदं तदनुमितिपरतया व्याचष्टे साध्यस्येति।

विशिष्टधूमवृत्तिताया इति। गुणाभावव्याप्तिविशिष्टतादृशाभाववद् धूमवृत्तितायाश्चेत्यपि बोध्यम्। एवकारेण वन्हिव्याप्तिविशिष्टपर्वतवृत्तिताया व्यवच्छेदः। पक्षस्य। विशेष्यस्य। प्रथमे—पक्षः साध्याभावव्याप्यवानित्यत्र। द्वितीये—साध्यं पक्षवृत्तित्वाभावव्याप्यवदित्यत्र। साध्याभावपक्षवृत्तित्वाभावयोरिति। पक्षः साध्याभावव्याप्यवानित्यत्र साध्याभावोव्यापकः, साध्यं पक्षवृत्तित्वाभाववदित्यत्र पक्षवृत्तित्वाभावोव्यापक इति भावः। ननु पक्षधर्मिकसाध्याव्याप्यवत्तावुद्धौ तद्धर्मिकसाध्याभावव्याप्यवत्तावुद्धेरेव प्रतिरोधकत्वमते पक्षस्य व्यापकस्य च भेदप्रयुक्तानानुगमाऽसंभव इत्यत आह-दीधितौ—अन्वयव्यतिरेकभेदेन चेति। इदमुपलक्षणम्। हेतुव्यापकसाध्यसामानाधिकरण्यरूपाया अपि व्याप्ते र्हेतुभेदेन हेतुतावच्छेदकसंबन्धभेदेन च भेदो बोध्यः। दीधितौ एकोपादाने। अन्वयव्याप्त्युपादाने। अन्यासंग्रहेण। व्यतिरेकव्याप्त्यसंग्रहेण। नायंदोषः। नाननुगमरूपोदोषः। तदुपादाय। वलमुपादाय। तदुपस्थित्यभिधानंचेति। वलोपस्थित्यभिधानंचेत्यर्थः। तद्विषयविषयकत्वेनेति।

विरोधिन्याः-पक्षो न साध्यवानित्याद्युपस्थितेः साध्यविरोधी-साध्यवत्ताज्ञान-प्रतिबंधकज्ञानविषयोबाधः, साध्याभाववत्पक्षादिः, तदुपस्थिते र्वा जननयोग्यया समानवलोपस्थित्या-तथाविधव्याप्त्यादिबुद्ध्या प्रतिरुद्धं कार्यं यस्य तादृशलिंगत्व मित्यर्थः ।

इत्याद्युपस्थितेरित्यादिना साध्यं पक्षावृत्तीत्याद्युपस्थितिपरिग्रहः । उपस्थापनेत्यत्र धात्वर्थोपस्थितौ विरोध्यन्तस्य स्तोकनम्रेत्यत्र नमने स्तोकस्येवाऽभेदान्वयः प्रयत्नेनोपपादनीयः । एतदस्वरसेन साध्यपदस्य मुख्यार्थपरत्वानुरोधेन च कल्पान्तरमाह । साध्यविरोधीति । तद्वत्ताग्रहप्रतिबन्धकज्ञानविषयत्वस्यैव विषयविरोधरूपत्वात् साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषय इति विवरणसंगतिः । साध्याभाववत्पक्षादिरित्यादिना पक्षावृत्तिसाध्यादिपरिग्रहः । एतच्च फलितकथनम् । तदुपस्थितेरिति । तादृशपक्षादेः कर्मतया उपस्थितिक्रियायामन्वयोयुक्त एवेति भावः ।

अथैवं पक्षे साध्यवति साध्याभाववत्पक्षादेरप्रसिद्ध्या सत्प्रतिपक्षितसद्धेतावव्याप्तिरिति चेन्न । यद्रूपावच्छिन्ने धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं पक्षतावच्छेदकवच्छिन्न साध्यतावच्छेदकावच्छिन्नवत्ताज्ञाप्रतिबन्धकं तद्रूपावच्छिन्ने पक्षे तद्रूपावच्छिन्नसाध्यकानुमितिजननयोग्योपस्थितिप्रतिरुद्धकार्यकत्वविवक्षणात् ।

अनुमितिजनकज्ञानविषयविषयकत्वेनेत्यर्थः । तन्निवेशोऽनुचित इति । प्रतिरोधकज्ञाननिवेशोऽनुचितइत्यर्थः । तथाचेति । तादृशानुमितिजनकज्ञानत्वे प्रतिरोधकज्ञाननिवेशे चेत्यर्थः । विरोध्युपस्थापनसमर्थत्वेनैवेति । विरोध्यनुमितिजनकत्वेनैवेत्यर्थः । एवकारेण विरोध्यनुमितिजनकज्ञानविषयविषयकत्वव्यवच्छेदः । उपस्थितेः साध्यविरोध्युपस्थितेः । निष्ठत्वं षष्ठ्यर्थः । तस्य विरोधित्वेऽन्वयः । तच्च उपस्थितिनिष्ठं प्रतिबन्धकत्वं च । न साध्यनिरूपितमिति । अपितु साध्यज्ञाननिरूपितमिति भावः । दीधितौ-साध्यसिद्धेः साध्यानुमितेः । विरोधिन्याः-प्रतिबन्धिकायाः पक्षो न साध्यवानित्याद्युपस्थितेरिति । अस्य जननयोग्यया इत्यनेनान्वयः । जनकतावच्छेदकविशिष्टया इति तदर्थः । प्रयत्नेनेति । धातुमात्रेण कर्मधारयसंभवात् क्रियाविशेषणीभूतविरोधिपदस्योपस्थापकपदेन कर्मधारये एकदेशान्वयाभ्युपगमः प्रयत्नः । एतदस्वरसेन । एकदेशान्वयापत्त्या । मुख्यार्थपरत्वानुरोधेनचेति । साध्यपदस्यसाध्यसिद्धिपरत्वेस्वारसिकलक्षणापत्तिरिति हृदयम् । तदुपस्थितेर्वेति । साध्याभावविपक्षविषयकोपस्थितेर्वेत्यर्थः । अन्वयोयुक्त एवेति । प्रतियोगिपदादन्यदित्यादिन्याया-

केचित्तु यत्र बाधो दोषः तत्रैव सत्प्रतिपक्षोदोषः, प्रतिहेतुपरामर्शसंवलनदशायां तत्रैव सत्प्रतिपक्षव्यवहारो यथार्थ इत्याशयेनैव एतत्कल्पानुसरणम्, तथा च साध्यवत्पक्षकहेतोरलक्ष्यतया न तत्राव्याप्तिरित्यप्याहुः।

वस्तुतः साध्यवत्ताज्ञानप्रतिबन्धकज्ञानत्वेनैवोपस्थितिर्लक्षणे निवेश्या, तादृशज्ञानविषयविषयकत्वेन तन्निवेशस्य शिरोवेष्टननेत्यादिन्यायेन हेयत्वात्। साध्यादिपक्षकसाध्यतावच्छेदकाद्यभावव्याप्यत्तापरामर्शवारणाय विशिष्टसाध्यादिग्रहाविरोधित्वेनापि प्रथमोपस्थितिर्विशेष्या।

दिति भावः। एवं साध्यविरोधिविषयकत्वेनोपस्थितेर्निवेशे। द्वितीयकल्पे इतियावत्। साध्यविरोधित्वाऽप्रसिद्ध्या इतियावत्। साध्याभाववत्पक्षादेरसिद्ध्येति। वन्ह्यभाववत्पर्वतादेरप्रसिद्ध्येत्यर्थः। यद्रूपावच्छिन्नेधर्मिणिपर्वतत्वावच्छिन्नेधर्मिणि। यद्रूपावच्छिन्नवत्ताज्ञानंवस्तुतः वन्ह्यभावत्वावच्छिन्नवत्ताज्ञानं। भ्रमात्मकं प्रसिद्धम्। विवक्षणादिति। ननु कांचनमयपर्वतस्य पक्षत्वे रजतमयवन्हेः साध्यत्वे कांचनमयपर्वतत्वावच्छिन्नपक्षाप्रसिद्ध्या, एवं रजतमयवन्हित्वावच्छिन्नसाध्याऽप्रसिद्धया च तादृशसत्प्रतिपक्षाऽव्याप्तिरिति चेन्न। प्रकृतपक्षतावच्छेदकावच्छिन्नशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितिजननयोग्योपस्थितिप्रतिरुद्धकार्यकत्वस्यं विवक्षणान्न दोषः।

तत्रैवहेतौ। प्रतिहेतौ। तथा च साध्यविरोधिपदेन वन्हिमत्पर्वतोग्राह्यइति भावः। एतत्कल्पानुसरणमिति। द्वितीयकल्पानुसरणमित्यर्थः।

दीधितौ-तदुपस्थितेर्वेति वाकारोऽनास्थायाम् यत्र पर्वतोवन्हिमान् प्रमेयो वा धूमादित्यत्र साध्याभाववत्पक्षः साध्याभावोवाऽप्रसिद्धः तत्र सत्प्रतिपक्षलक्षणाव्याप्तिभिया पूर्वकल्पस्यैवानुसरणीयत्वात्। पूर्वकल्पे च साध्यधीविरोधिन्या भ्रमरूपाया एवोपस्थितेः सौलभ्यात्। यद्रूपावच्छिन्ने धर्मिणीत्यादिग्रन्थस्तु उक्तिप्रकार एवेति मनसि निधायाह वस्तुत इत्यादिना। उपस्थितिः— साध्यविरोध्युपस्थितिः। न च साध्यपदस्य मुख्यार्थपरत्वानुपपत्तिः। मूलस्यसाध्यविरोधीति साध्यपदस्य स्वविषयकसिद्धिनिरूपितात्मकसंबन्धिनि लक्षणाया निरूढत्वात् तत्पुरुषे पूर्वपदस्य लक्षणाया आवश्यकत्वात्। एवकारव्यवच्छेद्यं दर्शयति। तादृशज्ञानविषयविषयकत्वेनेति। साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयविषयकत्वेनेत्यर्थः। तन्निवेशस्येति। उपस्थितिनिवेशस्येत्यर्थः।

जननयोग्येति । जननं एयर्थः । योग्यत्वं च समर्थपदार्थः । जनकतावच्छेदकधर्मविशिष्टया इति समुदितार्थः । वस्तुतः समानत्वं न विशेषणम् तस्याऽविवक्षितत्वात् । अपि तु उपस्थितावेव विशेषणमिति स्फुटीकर्तुं समानयेत्यसमासेन लिखनम् । तथाविधव्याप्त्यादिबुद्ध्या-साध्याभावव्याप्त्यादिबुद्ध्या । एतदपि वस्तुकथनम् । तया प्रतिरुद्धत्वं च-तत्प्रयुक्तानुत्पादप्रतियोगित्वम् ।

अथ साध्यवत्ताज्ञानप्रतिबन्धकोपस्थितिजनकोपस्थितिप्रतिरुद्धकार्यकलिंगत्वमिति-लक्षणम् परामर्शवारणायेति । कांचनमयत्वाभावव्याप्यवान् वन्हिरिति परामर्शकाले धूमहेतोः सत्प्रतिपक्षितत्ववारणायेत्यर्थः काञ्चनमयवन्हिमानित्यनुमितिप्रतिबन्धकीभूता या काञ्चनमयत्वाभाववान् वन्हिरित्याकारिकोपस्थितिः तज्जनिका या काञ्चनमयत्वाभावव्याप्यवानित्युपस्थितिस्तत्प्रतिरुद्धकार्यकत्वस्य धूमे सत्वादतिव्याप्तिः । विशेष्येति । साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहिग्रहत्वाव्यापकत्वं साध्यवत्ताज्ञाननिष्ठप्रतिबध्यतायां निवेशनीयमिति भावः । तथा च साध्याप्रसिद्धिनिश्चयनिरूपितायां साध्यवत्ताज्ञानप्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वादेव नातिव्याप्तिः । एव कांञ्चमयत्वाभावव्याप्यवान् पर्वत इति परामर्शकाले धूमहेतोः सत्प्रतिपक्षितत्ववारणाय विशिष्टपक्षग्रहाविरोधित्वेनापि उपस्थितिर्विशेष्या । तदर्थश्च पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहिग्रहत्वाव्यापकत्वम् । तदपि साध्यवत्ताज्ञाननिष्ठप्रतिबध्यताविशेषणम् । तथा च काञ्चनमयपर्वतोवन्हिमानित्यनुमितिप्रतिबन्धकीभूता या काञ्चनमयत्वाभाववान् पर्वत इत्याकारिकोपस्थितिस्तज्जनिका या काञ्चनमयत्वाभावव्याप्यवान् पर्वत इत्युपस्थितिस्तत्प्रतिरुद्धकार्यकत्वस्य धूमे सत्वेपि न क्षतिः । पक्षाप्रसिद्धिनिश्चयनिरूपितायां पक्षे साध्यवत्ताज्ञानप्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वादेव नातिव्याप्तिः । तथा च साध्यवत्ताग्रहत्वव्यापिका अथ च पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहिग्रहत्वाव्यापिका साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहिग्रहत्वाव्यापिका या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावदुपस्थितिजनकोपस्थितिप्रतिरुद्धकार्यकत्वं लक्षणम् ।

एयर्थ इति । उपस्थापनेत्यत्रेत्यादिः । समर्थपदार्थ इति । साध्यविरोध्युपस्थापनसमर्थेत्यत्रेत्यादिः । फलितार्थमाह । जनकतावच्छेदकधर्मविशिष्टयेति । साध्यविरोध्युपस्थितीत्यादिः । तया साध्यवत्ताज्ञानप्रतिबन्धकोपस्थितिजनकतावच्छेदकधर्मविशिष्टोपस्थित्या । साध्याभावव्याप्यवान् पक्षः इत्याकारकोपस्थित्या इति यावत् । तत्प्रयुक्तानुत्पादप्रतियोगित्वमिति । तत्प्रयुक्ताभावप्रतियोग्युत्पत्तिकत्वमित्यर्थः । तादृशोपस्थितिप्रयोज्याभावप्रतियोग्युत्पत्त्याश्रयत्वमिति यावत् । तच्च कार्यविशेषणम् ।

वन्हिव्याप्याभावादिसाध्यके वन्ह्यादिमत्पक्षविषयकानुमितिजनन-योग्यया वन्ह्यादिव्याप्यवत्पक्षोपस्थित्या बाधनिश्चयरूपया कार्यप्रतिरोधदशायामतिव्याप्तिवारणाय साध्यवत्ताज्ञानप्रतिबन्धकत्वं प्रथमोपस्थितिविशेषणम् ।

वन्हिव्याप्यवत्पक्षोपस्थितेरपि साध्यवत्ताज्ञानप्रतिबन्धिकां-वन्हिव्याप्यादिमत्पक्षविषयकसमूहालंबनरूपवन्ह्यादिमत्पक्षविषयकानुमितिं प्रति स्वरूपयोग्यतया यथाश्रुते उक्तातिव्याप्तेर्दुर्वारतया-साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठ-कार्यतानिरूपितकारणताश्रयत्वपर्यन्तं समर्थान्तेन विवक्षणीयम् ।

साध्यवत्ताज्ञानप्रतिबन्धकत्वमिति । साध्यविरोधित्वमिति मूलस्यस्य विवरणमिदम् । वन्हिव्याप्याभावसाध्यकस्थले वन्हिव्याप्याभावव्याप्यवानिति परामर्शकालीनवन्हिव्याप्यव्याप्यवानिति परामर्शदशायामेव सत्प्रतिपक्षत्वं न तु वन्हिव्याप्यवानिति परामर्शकाले, तस्य तत्स्थलीयबाधनिश्चयरूपत्वात् । एवं चोपस्थितिपदेन पर्वतोवन्हिमानिति ज्ञानमादाय तज्जनिका या पर्वतोवन्हिव्याप्यवानित्याकारिकोपस्थितिस्तत्प्रतिरुद्धकार्यकत्वस्य वन्हिव्याप्याभावसाध्यकस्थलीयहेतौ सत्वादतिव्याप्तिरिति भावः । साध्यविरोधित्वोपादाने तु वन्हिमत्पर्वतविषयकोपस्थितेः साध्यीभूतवन्हिव्याप्याभावानुमितिप्रतिबन्धकत्वाभावान्नातिव्याप्तिः । न च साध्याभाववत्पक्षविषयकत्वमेवोपस्थितौ निवेश्यतां किं साध्यवत्ताज्ञानप्रतिबन्धकत्वोपादानेनेति वाच्यम् । साध्यधर्मिकपक्षवृत्तित्वाभावव्याप्यवत्तापरामर्शदशायां सत्प्रतिपक्षत्वानुपपत्तेः । अथैवमपि उक्तातिव्याप्तिर्दुर्वारैव-पर्वतो वन्हिव्याप्यवान्वन्हिमांश्चेतिसमूहालंबनोपस्थितेः वन्हिव्याप्याभावरूपसाध्यवत्ताज्ञानप्रतिबन्धकत्वात्, तत्र च वन्हिव्याप्यवानित्युपस्थितौ वन्हिमत्पर्वतविषयकोपस्थितिजनकत्वस्य च सत्वादित्याशंकते । वन्हिव्याप्यवत्पक्षोपस्थितेरपीति । अस्य वन्हिमत्पक्षकानुमितिं प्रति स्वरूपयोग्यतयेत्यनेनान्वयः । स्वरूपयोग्यतया । जनकतावच्छेदकविषयताशालितया । यथाश्रुते साध्यवत्ताज्ञानप्रतिबन्धकत्वमात्रार्थकत्वे । समाधत्ते साध्यवत्ताज्ञानेति । समर्थान्तेनेति । साध्यविरोध्युपस्थापनसमर्थेत्यनेनेत्यर्थः । विवक्षणीयमिति । तथा च वन्हिमत्पर्वतविषयकानुमितिनिष्ठकार्यतायाः साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदक-विषयित्वानवच्छिन्नत्वाददोषः । न च कार्यतायामनुमितिनिष्ठत्वनिवेशोव्यर्थ इति वाच्यम् । पर्वतपक्षकवन्हिसाध्यकस्थले वन्हिव्याप्यवान् पर्वतः एवं वन्ह्यभाववान् पर्वत इतिज्ञानकाले सत्प्रतिपक्षतत्वापत्तिः- तथा हि- वन्हिमान्पर्वत इतिज्ञानप्रतिबन्धकीभूतवन्ह्यभाववान् पर्वत इतिशाब्दत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयोयः वन्ह्यभाववान् पर्वत इति योग्यताज्ञानं बाधनिश्चयविषया तत्प्रतिरुद्धकार्यकत्वस्य धूमे सत्वादतोऽनु-

न च साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदिका साध्याभावादि-प्रकारता तद्विधयतैव प्रतिहेतुपरामर्शजन्यतावच्छेदिकेति तज्जन्यतायां न प्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नत्वमित्युक्तविवक्षाया असंभव इति वाच्यम्। प्रकारताविशेषस्यैव विधेयतारूपत्वात्। अन्यथा तु यदवच्छिन्नविशेष्यकयदवच्छिन्नप्रकारकत्वं अनुमिति-प्रतिबन्धकतावच्छेदकं तदवच्छिन्नपक्षकतदवच्छिन्नविधेयकत्वा-वच्छिन्नकारणत्वमेव निवेश्यम्।

मितिनिष्ठत्वनिवेशः। एवं च तादृशकार्यताया अनुमित्यवृत्तित्वान्न दोषः। तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारता-शालिबुद्धित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमि-तिनिष्ठकार्यतानिरूपितकारणतावदुपस्थितिप्रयुक्तानुत्पादप्रतियोगिउत्पत्त्याश्रयकार्यक-परामर्शविषयलिंगत्वं लक्षणम्।

अनुगमस्तु, पक्षतावच्छेदकविशिष्टग्रहत्वव्यापकप्रतिबध्यताविशिष्टविषयिताविशिष्ट-परामर्शविषयत्वम्। ग्रहे पक्षतावच्छेदकवै० स्वावच्छिन्नविशेष्यतानि रूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वसंबन्धेन, विषयतायां प्रतिबध्यतावै० स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानु-मितिनिष्ठजन्यतानिरूपितजनकतावदुपस्थितीयत्वसं०। परामर्शे विषयितावै० स्वनिष्ठ-प्रयोजकतानिरूपितप्रयोज्यतावदभावप्रतियोगिउत्पत्त्याश्रयीभूतानुमितिजनकत्वसं०।

साध्याभावादिप्रकारतेति। वन्ह्यभाववान्पर्वतः प्रमेयइतिज्ञानस्यापि-प्रतिबन्धकत्वात्। तद्विधेयतैव। साध्याभावनिष्ठविधेयतैव। उक्तज्ञानस्य-जन्यतानवच्छेदकत्वात्। एवकारेण प्रकारताव्यावृत्तिः। प्रकारताविशेषस्यैवेति। प्रकारताव्याप्यस्यैवेत्यर्थः। धर्मितावच्छेदकतानात्मकस्येति यावत्। अन्यथा। अतिरिक्तत्वे।

अथ साध्यविरोध्युपस्थापनसमर्थोपस्थितिकालीनपरामर्शविषयलिंगत्वमित्येवास्तु प्रतिरुद्धकार्यकत्वविशेषणं व्यर्थमित्याशंकते। नन्विति। तादृशेति। साध्यविरोध्युपस्थापनसमर्थेत्यर्थः। ज्ञानविषयत्वमेवेति। साध्य-विरोध्युपस्थितिकालीनपरामर्शविषयत्वमेवेत्यर्थः। एवकारव्यवच्छेद्यं स्पष्टयति। किमिति। तथा च वन्हिव्याप्यधूमवान् पर्वतः-वन्ह्यभावव्याप्यपाषाण-मयत्ववान् पर्वतः इति ज्ञानमप्रमा इति अप्रामाण्यज्ञानास्कन्दितपरामर्शसत्वे धूमस्य सत्प्रतिपक्षितत्वापत्तिः-तथाहि-साध्यविरोधिनी पर्वतोवन्ह्यभाववानित्या-कारिकाउपस्थितिः तज्जनिका पर्वतोवन्ह्यभावव्याप्यवानितिज्ञानमप्रमेत्या-कारिका उपस्थितिः तत्कालीनपरामर्शविषयत्वस्य धूमे सत्वात्। प्रतिरुद्धकार्यकत्व निवेशे तु नोक्तापत्तिः, अप्राण्यज्ञानास्कन्दितविरोधिपरामर्शस्यानुमित्यप्रतिबन्ध-

दी०—विरोध्याप्यादिविषयत्वलक्षणयोग्यताशालिन्या अप्युपस्थितेरप्रामाण्यग्रहे सत्प्रतिपक्षत्वाऽसंपादकत्वात्कार्यप्रतिरोधानुधावनम् ।

ननु तादृशोपस्थितिकालीनज्ञानविषयत्वमेव साम्यक् किं तत्प्रतिरुद्धकार्यकज्ञानविषयत्वपर्यन्तनिवेशनेनेत्याकांक्षायामाह 'विरोधीत्यादि । अप्रामाण्यग्रहविशिष्टाया व्याप्त्याद्युपस्थितेर्न विरोध्यनुमितिजननयोग्यत्वं तद्ग्रहविशिष्टत्वेनैव परामर्शस्यानुमितियोग्यत्वादिति न तादृशोपस्थितिमादायातिव्याप्तिप्रसक्तिरित्याशंकां निराकरोति । विरोधिव्याप्त्यादिविषयत्वलक्षणयोग्यताशालिन्या इति । तथाच-जनकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वरूपयोग्यता नात्र विवक्षिता, किं तु जनकतावच्छेदककोटिप्रविष्टविषयतारूपैवेति भावः । कत्वेन तत्प्रतिरुद्धकार्यकत्वाभावादिति भावः । अप्रामाण्यज्ञानास्कन्दितविरोधिपरामर्शस्य कथं जनकत्वमतोत्याह । अप्रामाण्यग्रहविशिष्टायाः-अप्रामाण्यज्ञानास्कन्दितायाः । व्याप्त्याद्युपस्थितेः-व्याप्तिप्रकारकोपस्थितेः-परामर्शस्येति यावत् । न विरोध्यनुमितिजननयोग्यत्वमिति । न विरोध्यनुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वमित्यर्थः । तद्ग्रहविशिष्टत्वेनैवेति । अप्रामाण्यग्रहाभावविशिष्टत्वेनैवेत्यर्थः । एवकारेणाऽप्रामाण्यज्ञानास्कन्दितपरामर्शस्य व्यावृत्तिः । अनुमितियोग्यत्वादिति । अनुमितिसमर्थत्वादित्यर्थः । दीधितौ-योग्यताशालिन्या इति । जनकतावच्छेदककोटिप्रविष्टविषयताशालिन्या इत्यर्थः । उपस्थितेः । परामर्शस्य । विशेष्यकत्वं षष्ठ्यर्थः ग्रहान्वयि । अप्रामाण्यग्रहे । अप्रामाण्यप्रकारकग्रहे-तथा च विरोधिपरामर्शधर्मिकाऽप्रामाण्यप्रकारकग्रहे इत्यर्थः । सत्प्रतिपक्षत्वासंपादकत्वादिति । सत्प्रतिपक्षितत्वव्यवहाराप्रयोजकत्वादित्यर्थः । ननु अगृहीताप्रामाण्यकविरोधिपरामर्शस्यैवानुमितिस्वरूपयोग्यतयाऽप्रामाण्यग्रहे योग्यतैव नास्तीति चेत्तत्राह । अत्रेति । लक्षणे इत्यर्थः । तथा च पर्याप्त्यनिवेशकल्पे एव तत्प्रयोजनमिति भावः । एवं च पर्वतपक्षकवन्हिसाध्यकधूमहेतौ वन्हिव्याप्यधूमवान्पर्वतः वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति ज्ञानमप्रमेति अप्रामाण्यज्ञानास्कन्दितपरामर्शसत्वे सत्प्रतिपक्षितत्वापत्तिवारणाय तत्प्रतिरुद्धकार्यकत्वनिवेशइति भावः । अग्रिमसमानपदार्थपर्यालोचनयाऽगृहीताऽप्रामाण्यकसंवलितेस्यग्रिमग्रन्थप्रदर्शनाच्चेदानीमप्रामाण्यग्रहाभावस्य पृथक्कारणतापक्ष एवावसीयते इति तत्पक्षे पर्याप्तिप्रवेशेपि तत्संगतिरित्याह । अथवेति । एतत्-अतिव्याप्तिप्रदर्शनम् । कार्यप्रतिरोधानुधावनमिति तत्प्रतिरुद्धकार्यकेत्यस्यविवरणमिदम् । तथा च कार्यप्रतिरोधविवक्षणे च । विरोधिपरामर्शस्यैवेति । एवकारेण गृहीताप्रामाण्यकविरोधिपरामर्शव्यावृत्तिः । तदेवाह । गृहीतेति ।

अथवाऽप्रामाण्यग्रहाभावो नानुमितिजनकतावच्छेदकोऽपितु स्वातन्त्र्येण जनक एवत्यभिप्रायेणैतत्। कार्यप्रतिरोधानुधावनमिति। तथा चाऽप्रामाण्यग्रहाभावविशिष्टविरोधिपरामर्शस्य कार्यप्रतिरोधकत्वान्नोक्तस्थलेऽतिप्रसंगः।

उक्तस्थले-गृहीताप्रामाण्यकविरोधिपरामर्शसत्वे। नातिप्रसंगः। न सत्प्रतिपक्षत्वापत्तिः।

अथाऽप्रामाण्यग्रहाभावस्य स्वातन्त्र्येण जनकतास्वीकारे वन्हिव्याप्यधूमवत्तापरामर्शस्य जन्यतावच्छेदककोटौ वन्हित्वावच्छिन्नविधेयत्वादेर्न प्रवेशः, प्रयोजनाभावात्। अप्रामाण्यग्रहाभावविशिष्टपरामर्शत्वेन कारणत्वपक्ष तज्जन्यतावच्छेदककोटौ वन्हित्वावच्छिन्नविधेयत्वादेः प्रवेशः कार्यः, अन्यथा तत्परामर्शाऽव्यवहितोरत्वावच्छिन्नं प्रति तत्परामर्शत्वेन कारणत्वस्वीकारे यत्र अप्रामाण्यज्ञानास्कन्दितवन्हिव्याप्यधूमवत्तापरामर्शः घटव्याप्यवत्तापरामर्शश्च, ततः पर्वतोघटवानित्यनुमितौ व्यभिचारापत्तेः, एतदनुमितेरपि वन्हिव्याप्यधूमवत्तापरामर्शाव्यवहितोत्तरत्वेन तत्पूर्वमप्रामाण्यग्रहाभावविशिष्टपरामर्शविरहात्। कार्यतावच्छेदककोटौ अप्रामाण्यग्रहाभावं निवेश्य व्यभिचारवारणेपि महागौरवापत्तेः, तदपेक्षया तद्व्याप्यवत्तापरामर्शोत्तरतत्प्रकारकानुमितिं प्रति अप्रामाण्यज्ञानाभावविशिष्टतद्व्याप्यवत्तापरामर्शत्वेन हेतुत्वं, लाघवात्। अप्रामाण्यग्रहाभावस्य स्वातन्त्र्येण कारणत्वमते तु "घटानुमितेरुत्पादेन" उक्तरीत्या व्यभिचारविरहेण तादृशवन्हित्वावच्छिन्नविधेयत्वादेरप्रवेशेपि क्षत्यभावात्।

इत्थं च साध्यवत्वग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतावच्छेदकरूपावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावदुपस्थितिप्रतिरुद्धकार्यकपरामर्शं विषयत्वरूपलक्षणस्याऽसंभवः, तादृशरूपावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नजन्यत्वाप्रसिद्धेः। तादृशरूपावच्छिन्नविधेयत्वानिवेशे तु पर्वतोवन्हिमान्वन्हिव्याप्यवांश्चेत्युक्तसमूहालंबनोपस्थितिमादायोक्तातिप्रसंग इति चेन्न। एतन्मते जन्यताद्वयशून्यत्वेन साध्यविरोध्युपस्थितिर्विशेषणीया। उक्तसमूहालंबनोपस्थितिनिष्ठवन्ह्यनुमितेर्जन्यत्तामादाय वन्हिव्याप्याभावसाध्यकस्थले वन्हिव्याप्यवानितिज्ञानकाले न. सत्प्रतिपक्षत्वापत्तिः, तादृशसमूहालंबनानुमितेर्जन्यताद्वयशून्यताविरहादिति ध्येयम्।

साध्यवत्ताग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रनिबन्धकतावच्छेदकविषयदावच्छेदकरूपावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपिताजनकतावदुपस्थितिप्रतिरुद्धकार्यकपरामर्शविषयत्वं लक्षणम् तत्राशंकते। यद्यपीति। अगृहीताप्रामाण्यकबाधबुद्धिरूपत्वे इति। समूहालंबनबाधबुद्धिरूपत्वे इत्यर्थः।

यद्यपि अप्रामाण्यज्ञानास्कन्दितविरोधिपरामर्शस्याऽगृहीताऽप्रामाण्यकबाधबुद्धिरूपत्वे तत्प्रतिरुद्धकार्यकत्वमपि दुर्वारमिति यथाश्रुतातिव्याप्तिरस्त्येव। तथापि विरोध्यनुमितिजनकतावच्छेदकरूपस्य कार्यप्रतिरोधप्रयोजकताविवक्षणेनाऽतिव्याप्तिर्वारणीया।

वन्ह्यभाववव्याप्यपाषाणमयत्ववान् पर्वत इति ज्ञानमप्रमा पर्वतश्च वन्ह्यभाववानिति समूहालंवनज्ञानसत्वे इति यावत्। तत्प्रतिरुद्धकार्यकत्वमपि दुर्वारमिति। समूहालंवनबुद्धेर्बाधविषयकत्वेनोक्तपरामर्शप्रतिरुद्धकत्वमपि दुर्वारमिति भावः। अपिना विरोध्यनुमितियोग्यत्वं सूचितम्। यथाश्रुतातिव्याप्तिरस्त्येवेति। तथा च पर्वतपक्षकवन्हिसाध्यकधूमहेतौ. वन्हिव्याप्यधूमवान्पर्वतः, वन्ह्यभावव्याप्यपाषाणमयत्ववान्पर्वत इति ज्ञानमप्रमा इति ज्ञानसत्वे पर्वतोवन्ह्यभाववानितिज्ञानसत्वे सत्प्रतिपक्षितत्वापत्तिदुर्वारैव, वन्हिमत्ताज्ञानप्रतिबन्धकीभूतवन्ह्यभाववत्पर्वतविषयकोपस्थितिजनकीभूता या उक्तसमूहालंबनोपस्थितिस्तत्प्रतिरुद्धकार्यकलिंगत्वस्य धूमे सत्वादिति भावः। कार्यप्रतिरोधप्रयोजकतेवि। अनुमित्यनुत्पादप्रयोजकतेत्यर्थः। विवक्षणेनेति। विरोध्यनुमितिजनकतावच्छेदकविषयिताप्रयुक्तानुत्पादप्रतियोगिकार्यकपरामर्शविषयत्वविवक्षणेनेत्यर्थः। अतिव्याप्तिर्वारणीयेति। तथा च बाधविषयिताया विरोध्यनुमितिजनकतानवच्छेदकत्वान्नातिव्याप्तिरितिभावः। न च बाधविषयिताया विरोध्यनुमितिजनकतानवच्छेदकत्वेपि ज्ञानभेदेपि च समानाकारकज्ञानीयव्याप्तिविषयिताया ऐक्येन अनुत्पादस्य विरोधिविषयिताप्रयुक्तत्वं दुर्वारमिति वाच्यम्। प्रयोजकताया अव्याप्यवृत्तितयाऽप्रामाण्यग्रहविशिष्टसाध्याभावव्याप्तिविषयितायाः प्रयोजकत्वानुपगमात्। अप्रामाण्यग्रहाभावस्य पृथक्कारणत्वेपि प्रतिबन्धकतायामवच्छेदकत्वात्। एतेनानुत्पादस्यैकतया कथं न तत्प्रयुक्तत्वमिति निरस्तम्। अव्यवहितपूर्ववर्तिभिन्नतद्ज्ञानीयाऽप्रामाण्यग्रहाभावविशिष्टविषयिताया अप्रयोजकत्वस्यासकृदावेदितत्वात्। तथा चानुत्पादाधिकरणता बाधविषयिताप्रयुक्ता न तु विरोधिव्याप्त्यादिविषयिता प्रयुक्तेति अधिकरणतापर्यन्तनिवेशःकार्यः।

अथ वन्ह्यभावव्यापकत्वाभाववति वन्ह्यभावव्यापकत्वप्रकारकमित्येवमप्रामाण्यज्ञानास्कन्दितवन्ह्यभावव्यापकवन्ह्यभावसमानाधिकरणवन्ह्यभाववान् ह्रद इति निश्चयकाले सत्प्रतिपक्षत्वापत्तिः, तादृशजनकतावच्छेदकीभूतवन्ह्यभावद्ध्रदत्वावच्छिन्नविषयिताप्रयुक्तानुत्पादस्यैवं सत्वादिति चेन्न। साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयिताविशिष्टान्यविषयिताप्रयुक्तानुत्पाद इत्येवं विवक्षणेन दोषाभावात्। वै० स्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्व स्वनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकतानिरूपितत्वैतदुभयसंबन्धेन। साध्यवत्ताज्ञानप्रति-

दी०—समानत्वं चाऽगृहीताऽप्रामाण्यकसाध्यसिद्ध्यौपयिकपरामर्शकालीनत्वं।

न च यत्र विरोधिपरामर्शानन्तरक्षणे तद्विषयकाऽप्रामाण्यग्रहो-जातः तत्र पूर्वक्षणेऽप्रामाण्यग्रहाभावविशिष्टतद्ज्ञानरूपप्रतिबन्धक-सद्भावेन तत्क्षणे कार्यानुत्पादात्तत्क्षणे सत्प्रतिपक्षत्वं दुर्वारमेवेति वाच्यम्। यत्कालीनोपस्थित्याऽग्रिमक्षणे यस्य कार्यानुत्पादः स तदा सत्प्रतिपक्ष इति विवक्षयाऽतिप्रसंगवारणात्।

उपाध्यायरीत्या समानपदं सार्थकयितुं तदर्थमाह। समानत्वं चेति। अगृहीताप्रमाण्यकेति। स्वविषयकाऽप्रामाण्यग्रहाभाव-विशिष्टेत्यर्थः। साध्यसिद्ध्यौपयिकत्वं-प्रकृतसाध्यानुमितियोग्यत्वम्, योग्यत्वंचाऽप्रामाण्यज्ञानास्कन्दितस्यापि परामर्शस्याऽप्रामाण्यज्ञाना-भावस्य तत्सहकारित्वादिति नाऽगृहीताप्रामाण्यकत्ववैयर्थ्यम्। वन्ध्यकतावच्छेदकवन्ह्यभाववद्ध्रदत्वावच्छिन्नविपयिताविशिष्टत्वस्यैव वन्ह्यभाव-वद्ध्रदत्वावच्छिन्नविपयितायां सत्वेन तदन्यत्वविरहेण दोषाभावादिति।

न चेति। तत्क्षणे। अनन्तरक्षणे। विरोधिपरामर्शविषयकाऽप्रामा-ण्यग्रहक्षणे इति यावत्। यस्य। यत्परामर्शस्य। अतिप्रसंगवारणा-दिति। अप्रामाण्यग्रहानन्तरक्षणे कार्योत्पादादिति भावः।

दीधितौ-अगृहीताऽप्रामाण्यकेति। अगृहीताऽप्रामाण्यकोयः साध्य-सिद्ध्यौपयिकः परामर्शः तत्कालीनत्वमित्यर्थः। स्वविषयकेति। स्वं० प्रकृतसाध्यसिद्ध्यौपयिकपरामर्शः। अप्रामाण्यग्रहाभावरूपविशेषणसार्थक्याय साध्यसिद्ध्यौपयिकस्यार्थमाह। प्रकृतेति। प्रकृतसाध्यानुमितिजनकतावच्छेदक-धर्मवत्वमर्थः। अगृहीताप्रामाण्यकत्वरूपविशेषणस्यातिव्याप्तिवारणप्रयोजनमाह। योग्यत्वं चेति। प्रकृतसाध्यानुमितिजनकतावच्छेदकधर्मवत्वंचेत्यर्थः। अप्रामाण्यज्ञानास्कन्दितपरामर्शस्यापीति। वन्हिव्याप्यधूमवान् पर्वत इति ज्ञानमप्रमेति ज्ञानस्यापीत्यर्थः। अपिनाऽप्रामाण्यज्ञानानास्कन्दितपरामर्शस्य संग्रहः। अप्रामाण्यज्ञानाभावस्य स्वातन्त्र्येणानुमितिहेतुतामभिप्रेत्य योग्यत्वो-पादानम्। नाऽगृहीताप्रामाण्यकत्ववैयर्थ्यमिति। तथाचाऽप्रामाण्यज्ञाना-स्कन्दितपरामर्शसत्वे सत्प्रतिपक्षितत्वव्यवहारवारणाय तदुपादानमितिभावः।

तथा च साध्यविरोध्युपस्थापनसमर्थः अथ चाऽगृहीताप्रामाण्यकसाध्यसिद्ध्यौ-पयिकपरामर्शकालीनो यः परामर्शस्तत्प्रतिरुद्धकार्यकत्वं लक्षणम्। तत्राशंकते। अथेति। अगृहीताऽप्रामाण्यकत्वशरीरे इति। अप्रामाण्यग्रहाभाव विशिष्टत्वमित्यत्रेत्यर्थः अन्वयव्याप्त्यंशे इति। अन्वयव्याप्तिप्रकारकज्ञाननिष्ठमि-त्यर्थः। अस्य यदप्रामाण्यमित्यनेनाऽन्वयः। व्यतिरेकव्याप्त्यंशे इति। व्यतिरेक-

अथाऽगृहीताऽप्रामाण्यकत्वशरीरेऽन्वयव्याप्त्यंशे व्यतिरेकव्याप्त्यंशे च यदप्रामाण्यं तद्ग्रहाभावविशिष्टत्वं निवेश्यम्, तत्तद्व्याप्त्यंशेऽप्रामाण्यग्रहसत्वे तत्तद्व्याप्त्यवगाहिपरामर्शस्य सत्प्रतिपक्षत्वाप्रयोजकत्वात्। तथा चाऽन्वयव्यतिरेकव्याप्त्योरेकतरविषयकपरामर्शदशायां अन्यव्याप्त्यंशेऽप्रामाण्यग्रहसत्वे सत्प्रतिपक्षता न स्यात्।

व्याप्तिप्रकारकज्ञाननिष्ठमित्यर्थः। तद्ग्रहाभावविशिष्टत्वमिति। इदं च सावधारणम्। एवंचागृहीताप्रामाण्यकत्वदलेन साध्यान्वयव्याप्त्यभाववति हेतौ साध्यान्वयव्याप्तिप्रकारकोयोऽप्रामाण्यग्रहः-यश्च साध्यव्यतिरेकव्याप्त्यभाववति हेतौ साध्यव्यतिरेकव्याप्तिप्रकारकाऽप्रामाण्यग्रहः तत्तद्ग्रहाभावकूटवत्वमेव निवेश्यम् न तु यत्किंचिद्प्रामाण्यग्रहाभावविशिष्टत्वमिति भावः। कूटनिवेशस्य प्रयोजनमाह। तत्तद्व्याप्त्यंशे। केवलअन्वयव्याप्त्यंशे। केवलव्यतिरेकव्याप्त्यंशे। तत्तद्व्याप्त्यवगाहिपरामर्शस्य। अन्वयव्याप्त्यवगाहिपरामर्शस्य। व्यतिरेकव्याप्त्यवगाहिपरामर्शस्य। सत्प्रतिपक्षत्वाप्रयोजकत्वादिति। सत्प्रतिपक्षत्वाऽसंपादकत्वादित्यर्थः, एवं चाऽगृहीताऽप्रामाण्यकत्वदलेन अन्वयव्याप्त्यंशे यदप्रामाण्यं तदग्रहाभावो यदि निवेश्यते तदा व्यतिरेकव्याप्त्यंशेऽप्रामाण्यग्रहकालीनव्यतिरेकव्याप्त्यवगाहिपरामर्शसत्वे विरोधिपरामर्शसत्वे सत्प्रतिपक्षव्यवहारापत्तिरिति भावः। एवं व्यतिरेकव्याप्त्यंशेयदप्रामाण्यं तद्ग्रहाभावो यदि निवेश्यते तदाऽन्वयव्याप्त्यंशेऽप्रामाण्यग्रहकालीनान्वयव्याप्त्यवगाहिपरामर्शसत्वे तदापत्तिर्बोध्या। तथाचेति। तादृशाप्रामाण्यकूटवत्त्वनिवेशे चेत्यर्थः। एकतरविषयकपरामर्शदशायां। अन्वयव्याप्यवत्तापरामर्शदशायां। अन्यव्याप्त्यंशेऽप्रामाण्यग्रहसत्वे। व्यतिरेकव्याप्त्यंशेऽप्रामाण्यग्रहसत्वे। सत्प्रतिपक्षता न स्यादिति। साध्याभावव्याप्यवानिति निश्चयकालीनप्रकृतसाध्यीयान्वयव्याप्तिविशिष्टहेतुमानिति निश्चये व्यतिरेकव्याप्त्यंशेऽप्रामाण्यग्रहसत्वे सत्प्रतिपक्षता न स्यादिति भावः।

न चेति। स्वं॰ परामर्शः। अनुमितिविरोधिग्रहत्वेनेति। अनुमितिविरोधी च अन्वयव्याप्तिप्रकारकाऽप्रामाण्यग्रहः-व्यतिरेकव्याप्तिप्रकारकाऽप्रामाण्यग्रहश्च। उच्यते च -अप्राण्यग्रहद्वयमनुगमय्येति। अप्रामाण्यग्रहस्यानुमितिविरोधित्वं च मणिमन्त्रादिन्यायेन। तदभावविशिष्टत्वं। स्वयोग्यकानुमितिविरोधिग्रहाभावविशिष्टत्वमित्यर्थः। स्वपदग्राह्याऽन्वयव्याप्यवत्तापरामर्शयोग्यकानुमितिविरोध्यन्वयव्याप्त्यंशेऽप्रामाण्यग्रहः तदभाववैशिष्टयस्यान्वयव्याप्यवत्तापरामर्शेऽक्षतत्वान्नोक्तस्थले सत्प्रतिपक्षत्वानुपपत्तिरितिभावः। अथसाध्यविरोध्युपस्थापनसमर्थः अथ च स्वयोग्यकानुमितिविरोधिग्रहाभावविशिष्टसाध्यसिद्धचौपयिकपरामर्शकालीनोयः

न च स्वयोग्यकानुमितिविरोधिग्रहत्वेनाप्रामाण्यग्रहद्वयमनुगमय्य तदभावविशिष्टत्वं निवेश्यम् विरोधित्वं च समानविशेष्यकत्वानवच्छिन्नं ग्राह्यम्, तेन विरोधिपरामर्शादिव्यावृत्तिरिति वाच्यम्। एवं सति तादृशान्याप्तिद्वयविषयकसमूहालंबनपरामर्शे एकतरांशेऽप्रामाण्यग्रहसत्वे सत्प्रतिपक्षत्वानुपपत्तेरिति चेन्न।

परामर्शस्तत्प्रतिरुद्धकार्यकेत्यादिलक्षणम्। एवं च सर्वत्र विरोधिपरामर्शकाले सत्प्रतिपक्षत्वानुपपत्तिः, विरोधिपरामर्शस्यापि स्वयोग्यकानुमितिविरोधित्वादित्यत आह। विरोधित्वं चेति। समानविशेष्यकत्वानवच्छिन्नमिति। स्वसमानविशेष्यकत्वानवच्छिन्नमित्यर्थः। स्वं० अनुमितिः। अनुमितिविशेष्यतावच्छेदकावच्छिन्नविशेष्यत्वानवच्छिन्नमित्यर्थः। ग्राह्यमिति। अनुगमस्तु प्रकृतसाध्यसिद्धचौपयिकपरामर्शविशिष्टपरामर्शकालीनोपस्थितिप्रतिरुद्धकार्यकेत्यादिलक्षणम्। वै०स्वतादात्म्य-स्वनिष्ठजनकतानिरूपितजन्यतावच्छेदकीभूतविषयतावत्प्रतिबन्धकतावद्ज्ञानाभाववत्वोभयसंबन्धेन। प्रतिबन्धकतायां विषयतावत्ता च स्वावच्छेदकीभूतधर्मावच्छिन्नविशेष्यत्वानवच्छिन्नत्व-स्वावच्छिन्नप्रतिबध्यतानिरूपितत्वोभयसं०। तेन। समानविशेष्यकत्वानवच्छिन्नत्वनिवेशेन। विरोधिपरामर्शादिव्यावृत्तिरिति। वन्ह्यभावव्याप्यवान्पर्वतइति परामर्शनिष्ठविरोधितायाः समानविशेष्यकत्वानवच्छिन्नत्वविरहादिति शेषः। ननु पक्षावृत्तित्वव्याप्यवत्साध्यमिति विरोधिपरामर्शप्रतिबन्धकतायाः समानविशेष्यकत्वानवच्छिन्नत्वादव्याप्तिरिति चेन्न। समानविशेष्यकत्वानवच्छिन्नस्य निश्चयत्वानवच्छिन्नत्वपरत्वात्। बाधोपस्थितिजनकतावच्छेदकविषयित्वानवच्छिन्नत्वस्य तदर्थत्वादित्यपि केचित्। एवं सतीति। स्वयोग्यकानुमितिनिरूपिता या समानविशेष्यकत्वानवच्छिन्नविरोधिता तच्छालिग्रहाभावविशिष्टत्वनिवेशे सतीत्यर्थः। तादृशान्याप्तिद्वयविषयकेति। अन्वयव्यतिरेकव्याप्तिविषयकेत्यर्थः। समूहालंबनपरामर्शे इति। प्रकृतसाध्यान्वयव्याप्तिविशिष्टहेतुमान् प्रकृतसाध्यीयव्यतिरेकव्याप्तिविशिष्टहेतुमान् इति परामर्शसत्वे इत्यर्थः। विरोधिपरामर्शसत्वे इत्यपि बोध्यम्। प्रकृतरांशेऽप्रामाण्यग्रहसत्व इति। प्रकृतसाध्यीयाऽन्वयव्याप्त्यंशे ऽप्रमेतिज्ञानसत्वे इत्यर्थः। सत्प्रतिपक्षत्वानुपपत्तिरिति। तथा च यत्र प्रकृतसाध्यान्वयव्याप्तिविशिष्टहेतुमान् प्रकृतसाध्यव्यतिरेकव्याप्तिविशिष्टहेतुमान् साध्याभावव्याप्यवान् इति ज्ञानं प्रकृतसाध्यीयाऽन्वयव्याप्त्यंशेऽप्रामाण्यज्ञानं तत्र सत्प्रतिपक्षत्वानुपपत्तिः, विनिगमकाभावेन स्वपदग्राह्योऽन्वयव्याप्यवत्तापरामर्शेऽपि तद्योग्यकानुमितिविरोधी योऽन्वयव्याप्त्यंशेऽप्रामाण्यग्रहः तदभावविशिष्टत्वविरहादिति भावः।

**स्वीययत्किंचिद्विषयताप्रयोज्यानुमितिप्रतिबन्धकज्ञानसामान्याभावस्य निवेशनीयत्वात्। विरोधित्वं च विरोधिपरामर्शादिव्यावृत्तं ग्राह्यम्।**

ननु अन्वयव्याप्त्यवगाहिपरामर्शविशिष्टानुमितिं प्रति व्यतिरेकव्याप्त्यवगाहि-परामर्शाभावविशिष्टाऽन्वयव्याप्त्यंशेऽप्रामाण्यग्रहस्य प्रतिबन्धकत्वं वाच्यम्। एवं व्यतिरेकव्याप्त्यावगाहिपरामर्शविशिष्टानुमितिं प्रति अन्वयव्याप्त्यवगाहिपरामर्शा-भावविशिष्टव्यतिरेकव्याप्त्यंशेऽप्रामाण्यग्रहस्य प्रतिबन्धकत्वं वाच्यम्। एवं चोक्तस्थले अन्वयव्याप्त्यंशेऽप्रामाण्यग्रहस्य व्यतिरेकव्याप्त्यवगाहिपरामर्शविशिष्टत्वेनाऽप्रति-बन्धकत्वान्नोक्तसत्प्रतिपक्षत्वानुपपत्तिरितिचेद् अत्र वदन्ति। अप्रामाण्यग्रहस्य प्रतिबन्धकतायां परामर्शस्योत्तेजकत्वे उत्तेजकीभूतपरामर्शे अनन्ताऽप्रामाण्य-ग्रहाभावान्तरवैशिष्ट्यस्य निवेशनीयतया तदपेक्षया लाघवेनाप्रामाण्यग्रहाभाव-विशिष्टतत्तत्परामर्शविशिष्टानुमितिं प्रति तत्तद्व्याप्त्यंशेऽ प्रामाण्यग्रहस्य प्रतिबन्ध-कत्वं वाच्यं। न च परामर्शाऽप्रामाण्यग्रहयोः सत्वे अप्रामाण्यग्रहाभावविशिष्ट-परामर्शविशिष्टानुमित्यनुत्पादेपि शुद्धपरामर्शविशिष्टानुमित्युत्पादे बाधकाभावः। सामान्यसामाग्र्या कार्यजनने विशेषसामग्र्याःसहकारित्वोपगमादिति विशेषसामग्री-सहिताया एव सामान्यसामग्र्याः फलोपधायकत्वनियमादिति ध्येयम्।

स्वीयेति स्वं० परामर्शः। यत्र साध्यव्याप्यवान्, साध्याभावव्याप्यवान् पक्ष इति परामर्शौ वर्तेते तत्र स्वपदग्राह्यसाध्यव्याप्यवान्पक्ष इति परामर्शीय-साध्यव्याप्तिविषयताप्रयोज्या या प्रकृतसाध्यकानुमितिस्तत्तत्प्रतिबन्धकम् यत्साध्य-व्याप्त्यंशेऽप्रामाण्यज्ञानं तदभावस्य स्वपरामर्शे सत्वात्तादृशपरामर्शकालीनपरामर्श-प्रतिरुद्धकार्यकत्वसत्वाल्लक्षणसमन्वयः।

नन्वेवमसंभवः, तादृशानुमितिप्रतिबन्धकीभूतविरोधिपरामर्शस्य सत्वात् तादृशप्रतिबन्धकाभाववैशिष्ट्यस्य स्वपरामर्शे विरहादित्यत आह। **विरोधित्वं चेति।** अनुमितिप्रतिबन्धकत्वं चेत्यर्थः। **विरोधिपरामर्शादिव्यावृत्त-मिति।** विरोधिपरामर्शाऽवृत्तीत्यर्थः। तथा च निश्चयत्वानवच्छिन्नत्वं निवेश्यमिति भावः। तथा च विरोधिपरामर्शनिष्ठा प्रतिबन्धकता निश्चयत्वावच्छि-न्नैव अप्रामाण्यग्रहनिष्ठाप्रतिबन्धकता संशयसाधारणज्ञानत्वावच्छिन्ना. विरोधि-परामर्शव्यावृत्तमिति ग्रंथस्य एतादृशार्थे एव तात्पर्यात्।

यथाश्रुतनिवेशस्तु प्रकृतसाध्यसिद्ध्यौपयिकपरामर्शविशिष्टपरामर्शकालीनो-पस्थिति-प्रयुक्तानुत्पादप्रतियोगिकार्यकपरामर्शविषयत्वम्। वै० स्वतादात्म्य-स्वी-यविषयताविशिष्टत्वोभयसं०। वै० स्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकी-भूतविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितनिश्चयत्वानवच्छिन्नप्रतिबधकतावद्ज्ञाना-भाववत्वसंबन्धेनेति।

**समूहालंवनपरामर्शस्थले यादृशव्याप्त्यंशेऽप्रामाण्यज्ञानं नास्ति तादृशविषयताप्रयोज्यानुमितिविरोधिसामान्याभावस्य सत्वान्न तत्र सत्प्रतिपक्षत्वानुपपत्तिः ।**

उक्तानुपपत्तिं पारयति । **समूहालंवनपरामर्शस्थले** चेति । यत्र प्रकृतसाध्यान्वयव्याप्तिविशिष्टहेतुमान् तादृशसाध्यीयव्यतिरेकव्याप्तिविशिष्टहेतुमान् प्रकृतसाध्यीयाऽन्वयव्याप्त्यंशेऽप्रामाण्यज्ञानं तत्र चेत्यर्थः । यादृशव्याप्त्यंशे । व्यतिरेकव्याप्त्यंशे । तादृशव्याप्तिविषयताप्रयोज्येति । व्यतिरेकव्याप्तिविषयताप्रयोज्येत्यर्थः । **अनुमितिप्रतिवन्धकज्ञानसामान्याभावस्य** । व्यतिरेकव्याप्त्यंशेऽप्रामाण्यज्ञानसामान्यभावस्य । तत्र । समूहालंवनपरामर्शस्थले । **न सत्प्रतिपक्षत्वानुपपत्तिरिति** । तथा च स्वपदग्राह्यसमूहालंवनपरामर्शीयव्यतिरेकव्याप्तिविषयताप्रयोज्याऽनुमितिप्रतिवन्धकीभूता यद्व्यतिरेकव्याप्त्यंशेऽप्रामाण्यज्ञानं तदभावसत्वान्नानुपपत्तिरिति भावः ।

अथ विनिगमकाभावेन समूहालंवनस्थलीयानुमितौ अन्वयव्याप्तिविषयताया अपि प्रयोजकत्वेन तत्प्रयोज्यानुमितिप्रतिवन्धकीभूतअन्वयव्याप्त्यंशेऽ प्रामाण्यज्ञानाभावविरहादुक्तसत्प्रतिपक्षत्वानुपपत्तितादवस्थ्यम् । न च यादृशव्याप्त्यंशेऽप्रामाण्यज्ञानं नास्ति तादृशविषयतामात्रप्रयोज्यत्वं वक्तव्यम्,, तथाचोक्तस्थले व्यतिरेकव्याप्तिविषयतामात्रप्रयोज्यानुमितिप्रतिवन्धकीभूतव्यतिरेकव्याप्त्यंशेऽप्रामाण्यज्ञानाभावसत्वान्नानुपपत्तिरिति वाच्यम् । परामर्शीयपक्षविषयताया अपि प्रयोजकत्वेन तदीयर्यात्किचिद्विषयतामात्रप्रयोज्यानुमितेरप्रसिद्धेरितिचेन्न । स्वीययत्किंचिद्विषयताप्रयोज्यानुमितिसामान्यविरोधित्वनिवेशात् । एतादृशनिवेशाभिप्रायेणैव विरोधिपरामर्शव्यावृत्तं विरोधित्वं निवेशितम् ।

अथ स्वीययत्किंचिद्विषयताप्रयोज्यानुमितिसामान्यविरोधित्वनिवेशे पूर्वकल्पेपि स्वयोग्यकानुमितिसामान्यविरोधित्वनिवेशेनैव सामंजस्ये तत्कल्पपरित्यागोऽनुचितः । न च यत्रोभयव्याप्त्यवगाहिपरामर्शः एकतरव्याप्त्यंशेऽ प्रामाण्यग्रहात्मकः तत्र स्वयोग्यकानुमितित्वव्यापकप्रतिविध्यत्वाप्रसिद्धयैव पूर्वकल्पस्य न निर्दोषत्वसंभवः-तथा हि- अन्वयपरामर्शाव्यवहितोत्तरानुमितित्वावच्छिन्नं प्रति अन्वयव्याप्त्यंशेऽप्रामाण्यज्ञानस्य, व्यतिरेकपरामर्शाव्यवहितोत्तरानुमितित्वावच्छिन्नं प्रति च व्यतिरेकव्याप्त्यंशेऽप्रामाण्यग्रहस्य प्रतिवन्धकत्वं कल्प्यते, इत्थं च स्वयोग्यकानुमितित्वस्य व्यापकत्वं न कस्यापि अप्रामाण्यग्रहस्य प्रतिध्यतायामिति वाच्यम् । प्रतिवध्यतायां व्यापकत्वमनिवेश्य अप्रामाण्यग्रहे एवाऽनुमितित्वव्यापकत्वं निवेश्यते, व्यापकता च स्वनिष्ठप्रतिवन्धकतानिरूपितप्रतिवध्यतावत्वसं० । एवं चेदं ज्ञानमन्वयव्याप्त्यंशे व्यतिरेकव्याप्त्यंशे चाऽप्रमेत्याकारकज्ञानीयप्रतिवध्यतायां

दी०—असति गृहीताऽप्रामाण्यके वा परामर्शे सत्प्रतिपक्षितत्वव्यवहार-विरहात् ।

असति । अविद्यमाने परामर्शे । सत्प्रतिपक्षितत्वव्यवहारविरहात् । स्वस्य सत्प्रतिपक्षितत्वव्यवहारविरहात् । न चाऽसति गृहीताऽप्रामाण्यके वा प्रकृतसाध्यानुमापकपरामर्शे अप्रामाण्यग्रहाभावत्सहकृत-परामर्शरूपकारणविरहादेवानुमितिप्रतिरोधो न विरोधिपरामर्शप्रयुक्त इति समानत्वानिवेशेपि नातिप्रसंगावकाश इति वाच्यम् । तत्रोभयोरेव कारणाभावतया विनिगमनाविरहेण कार्याभावप्रयोजकताया दुर्वारत्वात् । विरोधिपरामर्शमात्रप्रयुक्तत्वस्य प्रयोजनविरहेणाऽनिवेशात्, यत्र प्रतिरोधकोविरोधिपरामर्शो वाधनिश्चयश्च वर्तते तत्रापि सत्प्रतिपक्षितत्वस्येष्टत्वात् ।

तादृशानुमित्वव्यापकत्वविरहेपि उक्तप्रतिवध्यतावत्वसंवन्धेनोभयव्याप्त्यंशेऽप्रामाण्यज्ञाने एव तादृशानुमित्वव्यापकत्वमस्ति, तथा च यत्रोभयव्याप्त्यवगाहिपरामर्शो एकतरव्याप्त्यंशेऽ प्रमा तत्रैकतरव्याप्त्यंशेऽप्रामाण्यज्ञानस्य स्वयोग्यकानुमितित्व-व्यापकत्वविरहेण तादृशस्वयोग्यकानुमितित्वव्यापकीभूतस्य उभयव्याप्त्यंशेऽप्रामाण्यग्रहस्य इदं ज्ञानमुभयव्याप्त्यंशेऽ प्रमेत्याकारकस्य योऽभावस्तस्यैकतरव्याप्त्यंशेऽप्रामाण्यज्ञानास्कन्दिते सत्वान्न तत्र सत्प्रतिपक्षत्वानुपपत्तिरिति पूर्वकल्पस्यैव सम्यक्त्वादिति चेन्न । यत्रादौ भाविज्ञानं अन्वयव्याप्त्यंशेऽप्रमा तत उभयव्याप्त्यवगाहिज्ञानं व्यतिरेकव्याप्त्यंशेऽप्रामाण्यज्ञानास्कन्दितं, तत्र तादृशाऽप्रामाण्यज्ञानद्वयस्यैव स्वयोग्यकानुमितित्वव्यापकविरहेण तादृशानुमितित्वव्यापकीभूतं यदप्रामाण्यग्रहान्तरं तदभावस्य तत्र सत्वात्सत्प्रतिपक्षता न स्यादिति पूर्वकल्पे दोषोवसेयः । उत्तरकल्पे तु तादृशाऽप्रामाण्यज्ञानद्वयमेव यत्किंचिद्विषयताप्रयोज्यानुमितित्वव्यापकमिति न दोषः । दीधितौ-असतीति दृष्टान्तार्थम् । यथा असति धूमपरामर्शे विरोधिपरामर्शसत्वेपि न सत्प्रतिपक्षताव्यवहारस्तथा गृहीताऽप्रामाण्यके "वन्हिव्याप्यधूमवान्पर्वत इति ज्ञानमप्रमेत्याकारके" परामर्शे न सत्प्रतिपक्षितत्वव्यवहार इति भावः । स्वस्य । धूमादिहेतोः । शंकते । नचेति । अनुमितिप्रतिरोधः । अनुमित्यनुत्पादः । तत्र । अनुमितौ । उभयोरेवेति । प्रकृतपरामर्शाभाव-विरोधिपरामर्शयोर्द्वयोरेवेत्यर्थः । कार्याभावप्रयोजकतयेति । द्वयोरेवेत्यादिः । दुर्वारत्वादिति । तथा च विरोधिपरामर्शप्रतिरुद्धकार्यकत्वसत्वात्सत्प्रतिपक्षितत्वापत्तिरिति भावः । ननु मात्रपदानुपादाने यत्र विरोधिपरामर्शोवाधनिश्चयश्च वर्तते तदापि सत्प्रतिपक्षितत्वापत्तिः, विरोधिपरामर्शप्रतिरुद्धकार्यकत्वस्यापि प्रकृतहेतौ सत्वादित्याशंकामिष्टापत्या परिहरति । यत्रेति ।

यत्तु प्रामाण्यनिर्णयेनाऽधिकबलतया बाधकस्य विरोधिपरामर्शस्य वारणाय समानेति ।

मिश्रोक्तसमानपदव्यावृत्तिं दूषयितुमुपन्यस्यति । यत्त्विति । प्रामाण्यनिर्णयेन । स्वविषयकप्रामाण्यनिश्चयेन । एतच्चबाधकताप्रयोजकाधिकबलतायां हेतुः । बाधकस्य । विरोध्यनुमित्युपधायकस्य । निश्चितप्रामाण्यकपरामर्शजन्यानुमितौ अनिश्चितप्रामाण्यकविरोधिपरामर्शो न प्रतिबन्धकः, तद्व्याप्यवत्ताज्ञानधर्मिकप्रामाण्यनिश्चयस्य विरोधिव्याप्यवत्ताज्ञानप्रतिबन्धकतायामुत्तेजकत्वात् । तादृशप्रामाण्यनिश्चये विरोधिव्याप्यवत्ताज्ञानधर्मिकप्रामाण्यनिश्चयाभावस्य विशेषणत्वोपगमेन उभयपरामर्शे प्रामाण्यनिश्चयदशायां उभयानुमितिप्रतिरोधनिर्वाह इत्यभिमानः ।

स्वविषयकेति । स्वं० विरोधिकोटिसाध्यकपाषाणमयत्वादिहेतुप्रकारकपरामर्शः, तद्विशेष्यकेत्यर्थः । एतच्च । प्रामाण्यनिश्चययेनेति च । हेतुरिति । तथा च विरोधिकोटिसाध्यकपरामर्शः अधिकबलः प्रामाण्यप्रकारकनिश्चयविशेष्यत्वादिति फलितम् । ननु तत्र स्वपरामर्शेन कथं न प्रतिबन्ध इत्यत आह । निश्चितप्रामाण्यकपरामर्शजन्यानुमिताविति वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति ज्ञानं प्रमेति परामर्शजन्यपर्वतोवन्ह्यभाववानित्यनुमितौ इत्यर्थः । अनिश्चितप्रामाण्यकविरोधिपरामर्शोन प्रतिबन्धक इति । केवलं वन्हिव्याप्यधूमवान् पर्वत इति परामर्शोन प्रतिबन्धक इत्यर्थः । उत्तेजकत्वादिति । तथा च तद्व्याप्यवत्ताज्ञानधर्मिकप्रामाण्यनिश्चयाभावविशिष्टविरोधिपरामर्शस्तद्वत्ताबुद्धौ प्रतिबन्धक इति भावः । एवं तदभावव्याप्यवत्ताज्ञानधर्मिकप्रामाण्यनिश्चयाभावविशिष्टतद्व्याप्यवत्तापरामर्शतदभाववत्ताबुद्धौ प्रतिबन्धकः । उक्तार्थमेवाह । तादृशप्रामाण्यनिश्चये इति । तद्व्याप्यवत्ताज्ञानधर्मिकप्रामाण्यनिश्चये इत्यर्थः । इत्यभिमान इति । मिश्रमते निश्चितप्रामाण्यकपरामर्शद्वयसत्वे एव सत्प्रतिपक्षितत्वम्, अनिश्चितप्रामाण्यकपरामर्शयोरकारणत्वाच्च न साध्यतदभावानुमित्योरापत्तिरिति ध्येयम् । अत्रोत्तेजकत्वं प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वम् । तथा च वन्हिव्याप्यधूमवान् पर्वतः वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति ज्ञानं प्रमा निश्चयसत्वे सत्प्रतिपक्षत्वापत्तिवारणाय समानपदमिति भावः । समानत्वोपादानेन कथं तद्वारणमित्याशंकायां, एतन्मते पूर्वोक्तसमानत्वनिवेशे वारणाऽसंभवाद् व्याचष्टे । समानत्वं चेति । एवं च समानत्वं न पूर्वोक्तमिति ध्येयम् । दीधितौ-बाधकस्येत्यनेनाऽबाधकत्वरूपसमानपदार्थोलभ्यते इत्याह । विरोधीति । तेन साध्यविरोध्युपस्थितिसमर्थप्रामाण्यनिश्चयास्कन्दितपरामर्श-

समानेतीति। समानत्वं च विरोधिबोधानुपधायकत्वम्, विरोधिबोधाव्यवहितप्राक्क्षणविशिष्टत्वाभाव इति यावत्। तत्प्रतिरुद्धकार्यकत्वं च तदभावातिरिक्तसकलप्रकृतसाध्यानुमितिकारणसमवधानकालावच्छिन्नत्वे सति तत्प्रयुक्तकार्यानुपधायकत्वम्। सकलकारणनिवेशादुभयपरामर्शसत्वे बाधेन हीनबलस्य हेतोर्न सत्प्रतिपक्षत्वम्। कार्यप्रतिरोधनिवेशश्च स्वपरामर्शे प्रामाण्यनिश्चयेनाऽधिकबलहेतावतिव्याप्तिवारणायैवेति बोध्यम्।।

प्रतिरुद्धकार्यकत्वस्य धूमादिहेतौ सत्वेपि नातिव्याप्तिः, तादृशपरामर्शस्य विरोधिबोधानुपधायकत्वाभावात्, विरोधिबोधाव्यवहितप्रक्क्षणविशिष्टत्वाद्वेति। अत्र वै० आधेयतासं०। तदभावातिरिक्तेति। विरोधिपरामर्शाभावातिरिक्तेत्यर्थः। तत्प्रयुक्तेति। विरोधिपरामर्शप्रयुक्तेत्यर्थः। सकलकारणनिवेशादिति। इदमुपलक्षणम्। सत्यन्तानिवेशादित्यपिबोध्यम्। हीनबलस्यहेतोः। धूमहेतोः। न सत्प्रतिपक्षितत्वमिति। अन्यथा स्वपदग्राह्यधूमहेतुकपरामर्शजन्यविरोधिबोधाव्यवहितप्राक्क्षणविशिष्टत्वाभाववद्धूमपरामर्शकालीनविरोधिपरामर्शप्रतिरुद्धकार्यकपरामर्शविषयत्वस्य धूमे सत्वाद् वन्हिव्याप्यधूमवान्वन्ह्यभावव्याप्यपाषाणमयत्ववान्पर्वतोवन्ह्यभाववानितिज्ञानकाले धूमेऽतिव्याप्तिः स्यादिति भावः। सकलकारणनिवेशात्तु बाधनिश्चयाभावरूपकारणविरहात्सकलप्रकृतसाध्यानुमितिकारणसमवधानकालावच्छिन्नत्वविरहान्नातिप्रसंगः। ननु विरोधिपरामर्शेपि प्रकृतहेतुपरामर्शाभावातिरिक्तसकलकारणान्तर्गतसिद्ध्यभावरूपकारणविरहेण न तत्र सत्प्रतिपक्षत्वप्रसक्तिरिति चेन्न। सिषाधयिषाकाले तत्संभवात्।

ननु तन्मात्रप्रयुक्तकार्यानुपधायकत्वनिवेशेनैव सामंजस्ये तदभावातिरिक्तेत्यादिकल्पान्तरं व्यर्थमिति चेन्न। प्रतिबन्धकज्ञानस्येव प्रतिबन्धकतावच्छेदकविषयताया अपि कार्यप्रतिरोधप्रयोजकतयाऽसंभवापत्तेः। कार्यप्रतिरोधनिवेशश्चेति। तत्प्रयुक्तकार्यानुपधायकत्वनिवेशश्चेत्यर्थः। स्वपरामर्शे। धूमपरामर्शे। प्रामाण्यनिश्चयेनेति। वन्हिव्याप्यधूमवान्पर्वतइतिज्ञानं प्रमेति निश्चयेनेत्यर्थः। अधिकबलहेतौ। धूमे। अतिव्याप्तिवारणायैवेति। वन्हिव्याप्यधूमवान् पर्वत इति ज्ञानं प्रमा-वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति ज्ञानद्वयसत्वेऽतिव्याप्तिवारणायैवेत्यर्थः। कार्यप्रतिरोधनिवेशे तु विरोधिपरामर्शप्रयुक्तकार्यानुपधायकत्वाभावान्नातिप्रसंग इति भावः। अथ तदभावातिरिक्तप्रकृतसाध्यानुमितिसकलकारणसमवधानकालावच्छिन्नत्वे सति तादृशकार्यानुपधायकत्वरूपतत्प्रतिरुद्धकार्यकत्वनिवेशेनैव सामंजस्ये तत्प्रयुक्तत्वनिवेशोव्यर्थः इति चेत्।

अत्र केचित्- यत्रादौ उभयपरामर्शः-ततोऽप्रामाण्यज्ञानं तत्राऽप्रामाण्यज्ञानकाले सत्प्रतिपक्षत्वापत्तिरतस्तत्प्रयुक्तत्वनिवेशः। न चाऽप्रामाण्यज्ञानकाले विरोधिपरामर्शाभावातिरिक्तसकलप्रकृतानुमितिकारणमेव नास्ति. अप्रामाण्यज्ञानाभावविशिष्टपरामर्शात्मककारणाभावादिति वाच्यम्। पूर्वक्षणावच्छेदेनोभयपरामर्शस्यैव अप्रामाण्यज्ञानाभावविशिष्टतया साध्यानुमितिकारणतावच्छेदकाश्रयत्वात्। सकलकारणसमवहितत्वशरीरे गौरवेण कारणतावच्छेदकविशिष्टाधिकरणत्वाऽनिवेशादित्याहुः।

वस्तुतोऽप्रामाण्यज्ञानाभावस्य पृथक्कारणतामताभिप्रायकोयं ग्रंथः। तथा च साध्यानुमितिसकलकारणमध्ये गौरवेणाऽप्रामाण्यज्ञानाभावव्यक्तीनां न निवेशः। अप्रामाण्यज्ञानकालेऽतिप्रसंगस्तु तत्प्रयुक्तत्वनिवेशेन वारणीय इति युक्तमुत्पश्यामः।

अथात्र विरोधिबोधाव्यवहितप्राक्क्षणविशिष्टत्वाभावमनुक्त्वा सामानाधिकरण्य-अव्यवहितप्राक्क्षणविशिष्टत्वान्यतरसंबन्धावच्छिन्नप्रतियोगिताकविरोधिबोधाभावविवक्षणे बाधेन हीनबलस्य हेतोः सत्प्रतिपक्षतावारणसंभवः। तथा हि-बाधविषयकसमूहालंबनपरामर्शेऽव्यवहितप्राक्क्षणविशिष्टत्वाऽसंभवेपि विरोधिबोधस्य बाधनिश्चयरूपस्य सामानाधिकरण्यसत्वेनाऽन्यतरसंबन्धेन विरोधिबोधाभावविरहात्। तथा च सति स्वपरामर्शे विरोधिपरामर्शाभावातिरिक्तसकलसाध्यानुमितिकारणसमवधानकालावच्छिन्नत्वनिवेशोव्यर्थः। न च यत्र वन्ह्यभावव्याप्यपाषाणमयत्ववान्पर्वतोवन्ह्यभाववांश्चेति समूहालंबनबाधनिश्चयः तत्रापि घटाद्यवच्छेदेन सामानाधिकरण्यविरहेण समूहालंबनतयाऽव्यवहितप्राक्क्षणविशिष्टत्वविरहेण च तादृशान्यतरसंबन्धेन विरोधिबोधाभावस्य परामर्शसत्वात् विरोधिपरामर्शाभावातिरिक्तसकलसाध्यानुमितिकारणसमवधानकालावच्छिन्नत्वानिवेशेऽतिप्रसंगोदुर्वार एवेति वाच्यम्। निरवच्छिन्नस्वरूपेण तादृशान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य विरोधिपरामर्शे विवक्षितत्वादितिचेन्न। यत्रादौ वन्ह्यभाववान् पर्वत इति बाधनिश्चयः ततो वन्हिव्याप्यधूमवान् वन्ह्यभावव्याप्यपाषाणमयत्ववांश्च पर्वत इति परामर्शः तत्र बाधनिश्चयनाशक्षणे सत्प्रतिपक्षव्यवहारानुपपत्तिः, तत्र विरोधिपरामर्शे तदुत्पत्तिक्षणे विरोधिबोधसत्वेन बाधनिश्चयनाशक्षणे शुद्धस्वरूपसंबन्धेन विरोधिबोधाभावस्य विरोधिपरामर्शे सत्त्वेऽपि निरवच्छिन्नस्वरूपसम्बन्धेन तदसत्वात्। इत्थं चाऽव्याप्तिभयेन निरवच्छिन्नत्वाऽनिवेशे बाधनिश्चयकालेपि विरोधिपरामर्शे घटाद्यवच्छेदेन तदभावमादाय बाधेन हीनबलतादशायां प्रकृतपरामर्शस्य सत्प्रतिपक्षतावारणाय विरोधिपरामर्शाभावातिरिक्तप्रकृतानुमितिसकलकारणसमवधानकालावच्छिन्नत्वमवश्यं निवेशनीयमिति संक्षेपः।

प्रतिहेतोः स्वसाध्यबाधेन हीनबलतायां प्रकृतहेतोः सत्प्रतिपक्षता-वारणाय च विरोधिपरामर्शेपि प्रकृतहेतुपरामर्शाभावातिरिक्तसकल-कारणसमवहितत्वं निवेश्यम्। वस्तुतो मिश्रमते अनुमितौ विरोधिपरामर्शमात्रस्य न विरोधित्वम्, किन्तुविरोध्यनुमिति-सामग्र्या एव। तथाचेतरकारणासमवहितस्य परामर्शस्य कार्या-प्रतिरोधकतया प्रतिरोधकपरामर्शेपि नेतरकारणसमवहितत्वं विशेषणं देयम्।

वन्हिव्याप्यधूमवान् पर्वतोवन्हिमान् वन्हभावव्याप्यवांश्चेति परामर्शसत्वे धूमे सत्प्रतिपक्षव्यवहारापत्तिः, स्वपदग्राह्यधूमहेतुकपरामर्शजन्यानुमितिविरोधि-प्राक्क्षणविशिष्टत्वाभाववद्धूमपरामर्शकालीनविरोधिपरामर्शप्रतिरुद्धकार्यकपरामर्शवि-षयत्वस्य सत्वादतआह। प्रतिहेतोरिति। पाषाणमयत्वादिहेतोरित्यर्थः। अस्य च हीनबलतादशायामित्यनेनान्वयः। तत्र हेतुः स्वसाध्यबाधेनेति। स्वपदग्राह्यपाषाणमयत्वादिहेतोर्यत्साध्यं-वन्ह्यभावः तस्य बाधेनेत्यर्थः। वन्हिमान् पर्वत इति–निश्चयेनेति यावत्। तथा च विरोध्यनुमितिसामग्र्या-एव विरोधित्वे। इतरकारणासमवहितस्य। बाधनिश्चयाभावरूपकारणा-समवहितस्य। बाधनिश्चयकालीनस्येति यावत्। प्रतिरोधकपरामर्शेपीति। विरोधिपरामर्शेपीत्यर्थः। इतरकारणसमवहितत्वमिति। प्रकृतहेतुक-परामर्शाभावातिरिक्तसकलकारणसमवहितत्वमित्यर्थः न देयमिति। वन्हिमा-नितिनिश्चयकालीनपरामर्शद्वयकाले विरोध्यनुमितिजनिकायाः "बाधनिश्चया-भावघटित" सामग्र्याः विरहेण विरोध्यनुमितिजनकसामग्रीप्रतिरुद्धकार्यकपरामर्श-विषयत्वस्य धूमे विरहेणातिप्रसंगविरहादिति भावः। तथा च साध्यविरोध्यनु-मितिजनकसामग्रीप्रतिरुद्धकार्यकपरामर्शविषयत्वं लक्षणम्।

अथ वन्ह्यभाववानितिनिश्चयकालीनपरामर्शद्वयकाले सत्प्रतिपक्षत्ववारणाय विरोधिपरामर्शाभावातिरिक्तसकलप्रकृतसाध्यानुमितिकारणसमवधानकालावच्छि-न्नत्वं स्वपरामर्शे निरर्थकम्। तादृशनिश्चयकाले विरोधिपरामर्शस्य विरोध्यनुमित्युपधायकतयैव वारणसंभवात्। न च वन्हिव्याप्यवत्तानिश्चयस्य प्रतिबन्धकतया कथं विरोध्यनुमित्युपपत्तिरिति वाच्यम्। सामग्र्या एव प्रतिबन्धकत्वमितिमताश्रयणेन तत्काले सामग्र्यभावेनानुत्पादसंभवादितिचेन्न। विरोधिपरामर्शेपीत्यत्रअपिशब्देन विरोधिपरामर्शाभावातिरिक्तसकलप्रकृत-साध्यानुमितिकारणसमवहितत्वमपि विशेषणं स्वपरामर्शे न देयमित्यर्थलाभात् स्वपरामर्शे विशेषणाभावेन पूर्वपक्षानुत्थितेः। परन्तु स्वपरामर्शे विशेषणा-भावे परामर्शे न देयमित्युक्त्यैव सामंजस्ये विरोधिपरामर्शे इत्युक्तेरसंगत्यापत्तेरिति

व्यभिचारेण प्रामाण्यग्रहस्याऽबलत्वात् ।

उभयपरामर्शेऽप्रामाण्यग्रहाऽसत्वे एकत्र प्रामाण्यनिश्चयेपि तस्याऽनुमितिजनकत्वासिद्ध्या विरोधिपरामर्शस्य सामग्रीविधया स्वातन्त्र्येण वा विरोधितायां न प्रतिबध्यानुमितिजनकपरामर्शीय-प्रामाण्यग्रहस्योत्तेजकत्वं इत्याशयेनाह । व्यभिचारेणेति । उक्तस्थले विरोध्यनुमित्युत्पत्तौ तत्र प्रकृतसाध्यानुमापकपरामर्शाभावरूप-कारणस्य व्यभिचारप्रसंगेनेत्यर्थः । अबलत्वात् । प्रकृतपरामर्शेऽ-प्रामाण्यग्रहमन्तरेण उक्तस्थलेऽनुमित्यनुपधायकत्वात् । तथा च सत्प्रतिपक्षत्वमिष्टमेव ।

विभावनीयम् । मिश्रमतं दूषयति । उभयपरामर्शे । वन्हिव्याप्यधूमवान् पर्वतः, वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति परामर्शद्वयसत्वे । एकत्र । वन्हिव्याप्यधूमवान् पर्वतः इति परामर्शे । प्रामाण्यनिश्चयेपि । वन्हिव्याप्य-धूमवान् पर्वत इति ज्ञानं प्रमेति निश्चयेपि । तस्य । वन्हिव्याप्यधूमवान्पर्वत इति परामर्शस्य । अनुमितिजनकत्वाऽसिद्ध्या । पर्वतोवन्हिमानित्यनु-मितिजनकत्वाऽस्वीकारेण । विरोधिपरार्शस्य । वन्ह्यभावव्याप्यपाषाण-मयत्ववान् पर्वत इति परामर्शस्य । षष्ठ्यर्थोनिष्ठत्वम् । अस्य विरोधिताया-मन्वयः । प्रतिबध्यानुमितिजनकपरामर्शीयेति । प्रतिबध्या या अनुमितिः तज्जनकोयः परामर्शः तद्विशेष्यकेत्यर्थः । अस्य ग्रहेऽन्वयः । प्रामाण्यग्रह-स्येति । प्रामाण्यप्रकारकग्रहस्येत्यर्थः । वन्हिव्याप्यधूमवान् पर्वत इति ज्ञानं प्रमा इत्याकारकग्रहस्येति यावत् । तथा च तद्व्याप्यवत्ताज्ञानधर्मिकप्रामाण्य-निश्चयाभावविशिष्टविरोधिव्याप्यवत्तानिश्चयस्य न प्रतिबन्धकत्वमिति भावः । एवं तदभावव्याप्यवत्ताज्ञानधर्मिकप्रामाण्यनिश्चयाभावविशिष्टतद्व्याप्यवत्तानिश्चय-स्यापि न प्रतिबन्धकत्वम् । उक्तस्थले । वन्हिव्याप्यधूमवान्पर्वतः- वन्ह्यभाव-व्याप्यपाषाणमयत्ववान् पर्वत इति ज्ञानं प्रमेति परामर्शद्वयस्थले । विरोध्यनु-मित्युत्पत्तौ । पर्वतोवन्ह्यभाववानितिविरोध्यनुमितिस्वीकारे । व्यभिचार-प्रसंगेनेति । व्यतिरेकव्यभिचारापत्त्येत्यर्थः । प्रकृतपरामर्शे । वन्हिव्याप्य-वत्तापरामर्शे । अप्रामाण्यग्रहमन्तरेण । वन्हिव्याप्यवत्तापरामर्शधर्मिकाऽ-प्रामाण्यप्रकारकग्रहंविना । उक्तस्थले । उक्तपरामर्शद्वयस्थले । प्रामाण्य-निश्चयास्कन्दितविरोधिपरामर्शस्यापीतिशेषः । अनुमित्यनुपधायकत्वात् । अनुमित्यजनकत्वात् । तथा च । अनुमित्यनुत्पत्तौ । अप्रामाण्यज्ञानाभाव-स्यैवोत्तेजकत्वमित्याह । अथवेति । तज्जनकज्ञाने । अनुमितिजनकज्ञाने । परामर्शे इति यावत् । प्रामाण्यनिश्चयं विनापीति । तादृशपरामर्शधर्मिक-प्रामाण्यनिश्चयासत्वेइत्यर्थः । अप्रामाण्यनिश्चयाभावसत्वे इति यावत् ।

अन्यथाऽप्रामाण्यग्रहानुकूलत्वेनैव क्वचित्तदुपयोगात्। बलपदोपसन्दा-नाच्चोक्तरूपलाभान्न तद्वैयर्थ्यम्। लिंगपदोपादानाच्च स्वीयलिंगतौपयिकपरा-मर्शलाभादात्मादेर्व्युदासः।

अथवा व्यभिचारेण- तज्जनकज्ञाने प्रामाण्यनिश्चयं विनाप्यनुमि-त्युत्पत्त्या- जनकज्ञाने प्रामाण्यग्रहस्याऽबलत्वात्- अनुमितिसामग्र्य-घटकत्वात्। तथा च यत्र प्रकृतपरामर्शे न प्रामाण्यग्रहः, किन्तु र्विरोधिपरामर्शे एव तत्रापि प्रकृतपरामर्शेऽ प्रामाण्यग्रहासत्वे कोटिद्वयानुमितिसामग्र्याः अक्षतत्वात्परस्परविरोधेन नैकस्या-नुमितिरिति सत्प्रतिपक्षत्वमिष्टमेवेति भावः।

ननु एकत्र प्रामाण्यग्रहदशायामेककोट्यनुमितेरानुभविकतया तस्यबलत्वमावश्यकमित्यत आह। अन्यत्रेति परामर्शान्तरे इत्यर्थः। तदुपयोगात। प्रामाण्यग्रहस्यानुमित्युपपादकत्वात्। बलपदस्या-विवक्षितार्थकत्वेऽपि समानपदस्य निरुक्तार्थतात्पर्यग्राहकतया बलपदो-पादानं सार्थकयति। बलपदेति। लिंगपदोपादानवैयर्थ्यशंकां परिहरति। लिंगपदेति। स्वीयलिंगतौपयिक इति। स्वनिष्ठप्र-कृतसाध्यानुमापकतावच्छेदकविषयताविशेषरूपगमतानिर्वाहकेत्यर्थः। आत्मादेरिति। तस्यापि धूमलिंगकवन्ह्यनुमित्यौपयिकपरामर्शका-लीनवन्ह्यभावाद्यनुमापकपरामर्शप्रतिरुद्धवन्ह्यनुमित्यात्मककार्यकत्वेन धूमादेरिव सत्प्रतिपक्षत्वापत्तिरिति भावः। न च प्रतिरुद्धकार्यकत्वं प्रतिरुद्धकार्यकपरामर्शविषयत्वं, तच्च नात्मादेरिति नातिप्रसंगशंकेति वाच्यम्। आत्मादेरपिप्रतिरुद्धकार्यकसमूहालंबनरूपधूमादिपरामर्श-विषयत्वात्।

अनुमितिसामग्र्यघटकत्वादिति। अनिश्चितप्रामाण्यकेनापि परामर्शेन स्वसाध्यानुमितेरुत्पादेन, विपरीतानुमितेश्चप्रतिबन्धकत्वेन प्रामाण्यनिश्चयस्य जनकतानवच्छेदकत्वादिति भावः। तथा च। प्रामाण्यग्रहस्यानुमितिसामग्र्य-घटकत्वे च। प्रकृतपरामर्शे। तद्व्याप्यवत्तापरामर्शे। विरोधिपरामर्शे एव। तदभावव्याप्यवत्तापरामर्शे एव। प्रामाण्यग्रह इति शेषः। सत्प्रति-पक्षितत्वमिष्टमेवेति। यावदेकत्राऽप्रामाण्यं न गृह्यते तावद्विरोधिपरामर्शयोः सत्प्रतिपक्षितत्वमिष्टमेवेति तद्वारणार्थं समानपदं व्यर्थमिति भावः।

एकत्र। विरोधिपरामर्शे। एककोट्यनुमितेः। तदभावानुमितेः। तस्य। प्रामाण्यग्रहस्य। परामर्शान्तरे इत्यर्थ इति। साध्यीयपरामर्शे इति यावत्। दीधितौअप्रामाण्यग्रहानुकूलत्वेनैव। अप्रामाण्यानुमापक-

विरोधिपरामर्शप्रतिरुद्धकार्यकत्वविशिष्टपरामर्शविषयत्वं तु फलितार्थः ।

प्रतिरुद्धकार्यकमित्यनेन प्रतिरुद्धकार्यकपरामर्शविषयत्वमवश्यमेव विवक्षणीयम् अनुमितेर्हेतुकार्यत्वाभावात् । तथा च तादृशविषयतायांप्रकृतानुमितिजनकतावच्छेदकत्वनिवेशेनैवोपपत्तेर्विरोधिपरामर्शे स्वनिष्ठप्रकृतानुमितिजनकतावच्छेदकविषयताकपरामर्शकालीनत्वनिवेशनमनुचितमित्याशयेन तथैवनिष्कृष्टार्थमाह । विरोधिपरामर्शेति । प्रकृतानुमितिविरोध्यनुमितियोग्यपरामर्शप्रयुक्ताग्रिमक्षणावच्छिन्नानु--त्पादप्रतियोगिप्रकृतानुमितिजनकतावच्छेदकीभूतपरामर्शीयविषयता--विशेषविशिष्टत्वमित्यर्थः ।

त्वेनैव । एवकारेणाऽनुमितिजनकतावच्छेदकत्वव्यावृत्तिः । अप्रामाण्यानुमापकस्याऽसार्वत्रिकत्वादाह । क्वचिदिति । ननु साध्यविरोध्युपस्थापनसमर्थ-समानोपस्थित्या प्रतिरुद्धकार्यकत्वमेव सम्यक्वलपदं मूलकृता किमित्युपात्तमतआह । वलपदस्येति । निरुक्तार्थेति । अगृहीताप्रामाण्यकसाध्यसिद्धयौपयिकपरामर्शकालीनरूपार्थेत्यर्थः । न तद्वैयर्थ्यम् । न वलपदवैयर्थ्यम् । समानपदेनोक्तार्थलाभे तात्पर्यग्राहकतया वलपदं सफलमिति भावः । लिंगत्वस्य केवलान्वयितया यथाश्रुतलिंगपदेनापि नात्मादेर्वारणसंभव इत्यत आह । स्वनिष्ठेति । प्रकृतहेतुनिष्ठेत्यर्थः ।

प्रतिरुद्धकार्यकमित्यनेनेति । प्रतिरुद्धकार्यकलिंगत्वमित्यनेनेत्यर्थः । अनुमितेर्हेतुकार्यत्वाभावादिति । मणिकारमते लिंगस्यानुमित्यकारणत्वादिति भावः । तथा च । प्रतिरुद्धकार्यकपरामर्शविषयत्वनिवेशे च । तादृशविषयतायां । प्रतिरुद्धकार्यकपरामर्शविषयतायां । आपत्तेरिति । तथा च प्रतिरुद्धानुमितिजनकतावच्छेदकविषयताश्रयत्वनिवेशेनैवोपपत्तेरित्यर्थः । अनुत्पादप्रतियोगीति । अनुत्पादप्रतियोगिउत्पत्त्याश्रयेत्यर्थः । प्रकृतानुमितिः—पर्वतोवन्हिमानित्याकारिका--तद्विरोध्यनुमितिः—पर्वतोवन्ह्यभाववानित्याकारिका तद्योग्यःपरामर्शः । वन्ह्यभावव्याप्यवान् पर्वतः इत्याकारकः तदग्रिमक्षणे । पर्वतोवन्हिमानित्यनुमितेरनुत्पादः तत्प्रतियोगि । पर्वतोवन्हिमानित्यनुमितिजनकतावच्छेदकविषयताश्रयत्वस्य धूमे सत्वाल्लक्षणसमन्वयः । अत्र प्रकृतानुमितिविरोध्यनुमितियोग्यपरामर्शेत्यस्य साध्यविरोधिविधेयकानुमितिजन--कतावच्छेदकीभूतप्रकारित्वावच्छिन्नपक्षविशेष्यिताकनिश्चयेत्यर्थो वोध्यः । एतल्लाभायैव परामर्शस्योपादानम् । तेन निर्वन्हिर्वन्ह्यभाववान् जलत्वादित्यादौ प्रकृतानुमितिविरोधि प्रकृतपक्षकप्रकृतसाध्याभावस्याहार्यतया तादृशानुमित्यप्रसिद्धया तत्र तयोर्विरोधिपरामर्शयोः काले न सत्प्रतिपक्षत्वानुपपत्तिः । तदभावव्याप्य-

दी०—अगृहीताप्रामाण्यकत्वसंवलितयोग्यतोपादाने तु बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यसिद्धिसमर्थपरामर्शविषयत्वं वाच्यम् ।

अगृहीताप्रामाण्यकपरामर्शत्वेनाऽनुमितिजनकतामते जनकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वरूपयोग्यता न गृहीताऽप्रामाण्यकपरामर्शस्य इति कार्यप्रतिरोधनिवेशमन्तरेणैवोप त्या तं परित्यजति । अगृहीताप्रामाण्यकेति । बाधोपस्थितिसमर्थेति । साध्यवत्ताज्ञानप्रतिबन्धकत्वे सति तत्प्रतिबध्या याऽनुमितिस्तद्योग्येत्यर्थः । साध्यवत्ताधीप्रतिबध्यत्वनिवेशात्साध्याभावव्याप्यानुमितिसमर्थपरामर्शकाले नातिप्रसंगः । तत्कालीनत्वं च एककालावच्छिन्नैकात्मवृत्तित्वसंबन्धेन तद्विशिष्टत्वम्, तेन व्यधिकरणपरामर्शादाय नातिप्रसंगः ।

विशिष्टधर्मिणि तद्वत्ताज्ञानस्यैवानभ्युपगमेन वन्ह्यभावविशिष्टधर्मिणि वन्हिव्याप्यवत्तापरामर्शोत्पादे बाधकाभावादिति ध्येयम् । एवं प्रकृतानुमितिजनकतावच्छेदकीभूतपरामर्शीयेत्यस्य साध्यविधेयकानुमितिजनकतावच्छेदकीभूतप्रकारित्वावच्छिन्नपक्षविशेष्यताकनिश्चयीयेत्यर्थोबोध्यः । तेन निर्वन्हिर्वन्हिमान् धूमादित्यादिस्थले विरोधिपरामर्शद्वयकाले न सत्प्रतिपक्षत्वानुपपत्तिः ।

अगृहीताऽप्रामाण्यकपरामर्शत्वेनेति । अप्रामाण्यग्रहाभावविशिष्टपरामर्शत्वेनेत्यर्थः । जनकतामते इति । तथा चैतन्मतेऽ प्रामाण्यग्रहाभावो न स्वातन्त्र्येण जनकः । युक्तंचैतत्-परामर्शधर्मिकतत्तदप्रामाण्यज्ञानाभावत्वेन परामर्शत्वेन च प्रत्येकरूपेणानुमितिहेतुत्वे अप्रामाण्यज्ञानास्कन्दितपरामर्शोत्तरं साध्यस्य परामर्शान्तरादनुमित्यनुत्पादापत्तेः, तत्तदप्रामाण्यज्ञानव्यक्तेरपि अनुमितिविरोधित्वात्, अन्यथा द्वितीयपरामर्शोत्पादक्षणे एवाऽनुमित्यापत्तेः । न गृहीताप्रामाण्यकपरामर्शस्येति । अप्रामाण्यग्रहाभावस्यापि जनकतावच्छेदककोटिप्रविष्टत्वादिति भावः । उपपत्त्येति । स्वपरामर्शसत्वे विरोधिपरामर्शधर्मिकाऽप्रामाण्यनिश्चयसत्वे सत्प्रतिपक्षत्वापत्तिवारणेनेति यावत् । तथा च विरोधिपरामर्शस्याऽप्रामाण्यज्ञानदशायां साध्यविरोध्युपस्थापनस्वरूपयोग्यत्वभावादेव सत्प्रतिपक्षत्वासंपादकत्वात् कार्यप्रतिरोधानुधावनं व्यर्थमित्याशयेनाह । तं परित्यजतीति । तं । तत्प्रतिरुद्धकार्यकत्वदलम् । दीधितौ-बाधोपस्थितिसमर्थेति । बाधोपस्थितिजनकेत्यर्थः । पर्वतोवन्हिमान्धूमादित्यत्र । बाधोपस्थितिः पर्वतोवन्ह्यभाववानित्याकारिका, तज्जनकोयः वन्ह्यभावव्याप्यवान् पर्वत इति परामर्शः—तत्कालीन साध्यसिद्धिसमर्थपरामर्शविषयत्वं धूमे इति समन्वयः । सत्यन्तमात्रोक्तौ अतिप्रसंगमाह । साध्याभावव्याप्यानुमिति-

दी०—यदि चायं वन्हिव्याप्यवान्वन्ह्यभावव्याप्यवांश्चेपरामर्शादयं वन्हिमान्

यदि चायमिति। अनुमितिः प्रामाणिकीत्यत्र न तु सत्प्रतिपक्षत्व-मित्यत्र च यदि चेत्यस्य संबन्धः। तदभावव्याप्यवत्तानिश्चयानन्तर-समर्थपरामर्शकाले इति। साध्याभावव्याप्यवान् पक्ष इति परामर्शसत्वे इत्यर्थः। साध्यव्याप्यवान पक्ष इति परामर्शसत्वे इत्यपि वोध्यम्। नाति-प्रसंग इति। तथा च वन्हिमान् धूमादित्यत्र साध्यवत्ताज्ञानप्रतिवन्धकोप-स्थितिर्वन्ह्यभावव्याप्यवानित्युपस्थितिः तज्जनकीयः वन्ह्यभावव्याप्यव्याप्यवानिति परामर्शः तत्कालीन वन्हिव्याप्यधूमवानितिपरामर्शविषयत्वस्य धूमे सत्वादतिप्रसंग-वारणाय विशेष्यदलम्। तथा च तादृशवाधोपस्थितौ साध्यवत्ताधीप्रतिवन्धकत्व-सत्वेपि साध्यवत्ताधीप्रतिवध्यत्वविरहान्नातिप्रसंग इति भावः। कार्यप्रतिरोध-घटितलक्षणे साध्यवत्ताधीप्रतिवध्यत्वस्यानिवेशेपि तदघटितलक्षणे तन्निवेश्यमिति ध्येयम्, पर्वतोवन्हिव्याप्यवान्धूमादित्यत्र वन्हिव्याप्यव्याप्यवान् वन्ह्यभावव्याप्यवा-निति परामर्शसत्वे वन्हिव्याप्यवत्ताज्ञानप्रतिवध्यवन्ह्यभावोपस्थितिजनकपरामर्श-कालीनपरामर्शविषयत्वमादायाऽतिव्याप्तिरतः सत्यन्तदलम्। तथा च वन्ह्यभावा-नुमितेर्वन्हिव्याप्यवत्ताज्ञानाऽप्रतिवन्धकत्वान्नदोषः।

अथात्र प्रतिवध्यत्वनिवेशेपि वन्ह्यभावव्याप्यसाध्यकस्थले साध्यवत्ताधी-प्रतिवन्धिका सती तत्प्रतिवध्या या वन्ह्यभावव्याप्याभावव्याप्यवन्हिमानित्युपस्थितिः तत्समर्थतादृशवन्हिव्याप्यवत्तापरामर्शकालीनवन्ह्यभावव्याप्यव्याप्यवत्तापरामर्शमादाय अतिप्रसंगोदुर्वार इति कार्यप्रतिरोधनिवेश आवश्यक इति चेन्न। एकरूपावच्छिन्न-प्रतिवध्यत्वप्रतिवन्धकत्वनिवेशेनैवोक्तातिप्रसंगस्य वारणादिति विभावनीयम्।

न च निर्वन्हिर्वन्हिशून्यइत्यादौसाध्यवत्ताज्ञानप्रतिवन्धिकायाः वाधोपस्थितेर-प्रसिद्धिः, तस्या आहार्यत्वादिति वाच्यम्। धर्मितावच्छेदकतासंवन्धेन प्रतिवध्य-प्रतिवन्धकभावस्य प्रामाणिकतया तत्संवन्धेनैव कार्यकारणभावस्वीकाराच्च। साध्यवत्ताज्ञानप्रतिवध्यतावच्छेदकत्वविशिष्टप्रतिवन्धकतावच्छेदकत्वाश्रयप्रकारत्वाव-च्छिन्नजन्यतानिरूपितजनकताश्रयत्वनिवेशाच्च न दोषः।

तद्विशिष्टत्वमिति। परामर्शविशिष्टत्वमित्यर्थः। वै० स्वसामानाधिकरण्य-स्वावच्छेदकक्षणावच्छिन्नत्वोभयसं०। आद्यसंवन्धस्य फलमाह। तेनेति। प्रथमसंबन्धनिवेशेनेत्यर्थः। व्यधिकरणपरामर्शावादायेति। इदमुपलक्षणम्। कालान्तरीयपरामर्शावादायेत्यपि वोध्यम्। तादृशनिश्चयक्षणेपि। तदभाव-व्याप्यवत्तानिश्चयक्षणेपि। तादृशनिश्चयस्य। तदभावव्याप्यवत्तानिश्चयस्य। स्वोत्पत्तिक्षणेपि। तादृशनिश्चयोत्पत्तिक्षणेपि। तत्र। तादृशनिश्चयोत्पत्तिक्षणे। तदग्रिमक्षणे। अनुमित्युत्पत्त्यनन्तरक्षणे। विरोधिपरामर्शादपीति।

वन्ह्यभावव्याप्यवांश्चेत्यनुमितिः प्रामाणिकी न तु सत्प्रतिपक्षत्वम्, तदा कार्यप्रतिरोधोऽवश्यमुपादेयः ।

अजनितविरोधिबोधकत्वेन च विरोधिपरामर्शो विशेषणीयः ।

मिव तादृशनिश्चयक्षणेपि नानुमितिर्जायते, तादृशनिश्चयस्य बाधनिश्चवयत् स्वोत्पत्तिक्षणेपि कार्योत्पत्तिविरोधित्वात् । तत्रानुमितेः प्रामाणिकत्वे तादृशानुमित्युत्पादक्षणे सत्प्रतिपक्षतायामपि न क्षतिः । तदग्रिमक्षणे विरोधिपरामर्शवशादप्यनुमितिप्रतिरोधादित्युभयत्र विवादप्रदर्शनार्थं तदभिधानम् । कार्यप्रतिरोधोऽवश्यमुपादेय इति । स्वातन्त्र्येण प्रकृतसाध्यसिद्ध्यौपयिकपरामर्शे स्वजन्यकार्याभावविशिष्टत्वरूपं प्रतिरुद्धकार्यकत्वं अगृहीताऽप्रामाण्यकत्वेनानुमितिहेतुतामतेपि निवेश्यमित्यर्थः ।

अजनितविरोधिबोधकत्वेन । स्वजन्यविरोध्यभावविशिष्टत्वेनेत्यर्थः । विशेषणीय इति । तेन तत्रैव विरोधिवन्हिसाध्यकपरामर्शेन वन्ह्यभावसाध्यकहेतोर्न सत्प्रतिपक्षितत्वमिति भावः ।

वन्हिव्याप्यधूमवत्तापरामर्शादपीत्यर्थः । अपिना पर्वतोवन्हिमानित्यनुमितेः समुच्चयः । तस्या अपि बाधनिश्चयरूपत्वात् । अनुमितिप्रतिरोधादिति । वन्ह्यभावानुमितिप्रतिरोधादित्यर्थः । उभयत्र । अनुमितौ सत्प्रतिपक्षितत्वविरहे च । तदभिधानं । यदि चेत्यभिधानम् । अव्यवहितपूर्ववर्त्तिप्रतिबन्धकाभावः कारणमिति मतेन यदिचेत्युक्तम् इति बोध्यम् । दीधितौ—तदेति । तादृशानुमितेःप्रामाणिकत्वे-सत्प्रतिपक्षत्वविरहे चेत्यर्थः । प्रकृतसाध्यसिद्ध्यौपयिकपरामर्शे इति । बाधोपस्थितिसमर्थपरामर्शकालीनप्रकृतसाध्यसिद्ध्यौपयिकपरामर्शे इत्यर्थः । स्वजन्येति । स्वं० प्रकृतसाध्यसिद्ध्यौपयिकपरामर्शः । तज्जन्यं यत्कार्यं तदभाववैशिष्ट्यरूपमित्यर्थः । वै० स्वाव्यवहितपूर्ववर्त्तित्वस्वसामानाधिकरण्योभयसं० दीधितौ । अवश्यमिति । विरोधिपरामर्शप्रतिरुद्धकार्यके एव परामृष्यमाणहेतौ प्राचांमते सत्प्रतिपक्षितत्वव्यवहारादिति भावः । मतेपीति । मतेऽस्मिन् यत्परामर्शधर्मिकाऽप्रामाण्यग्रहः तत्परामर्शस्य कारणता न कल्प्यते तत्तदप्रामाण्यग्रहाभावस्य च न स्वातन्त्र्येण कारणता कल्प्यते तदुत्तरं कार्यानुत्पादादिति ध्येयम् । निवेश्यमिति । तथा च वन्हिमानित्यनुमितिकालीनवन्ह्यभावव्याप्यवानिति परामर्शमादाय तत्पूर्वकालीनवन्हिव्याप्यवानितिपरामर्शविषये नातिप्रसंगः, वन्हिमानित्यनुमितेर्जातत्वेन तत्कार्याऽप्रतिरोधादिति भावः । तत्रैव वन्हिव्याप्यवानितिपरामर्शमादाय तदुत्तरकालीनवन्ह्यभावव्याप्यवानितिपरामर्शविषयेऽतिव्याप्तिवारणाय दीधितौ-अजनितेति । अत्रापि

अतएवाऽग्रिमलक्षणे विरोधिबोधकान्येति फलतोऽज्ञानविशेषणम्। एकस्याऽप्रामाण्यग्रहे ऽपरेणानुमितिजननात् तद्वारणाय वा तत्।

अतएव। उक्तस्थले वन्ह्यभावसाध्यकहेतोः सत्प्रतिपक्षलक्षणवारणानुरोधादेव। विरोधिबोधकान्येति। निरुक्तार्थकमितिशेषः। यथाश्रुतशब्दतोगमकतौपयिकरूपे विरोधिबोधकान्यत्वं लभ्यते, न तु ज्ञायमानपदोपस्थाप्ये ज्ञाने। तथाविवक्षणे च यादृशव्याप्त्यादिमत्तया ज्ञानेन प्रकृतसाध्यकपरामर्शशून्यपुरुषान्तरस्य विरोध्यनुमितिर्जनिता प्रकृतसाध्यकपरामर्शसमवहिततादृशव्याप्त्यादिविषयकज्ञानान्तरस्यापि सत्प्रतदेत्यनुपज्यते। स्वजन्येति। स्वं० बाधोपस्थितिसमर्थपरामर्शः तज्जन्या या विरोध्यनुमितिस्तदभावविशिष्टत्वेनेत्यर्थः। वै० पूर्ववत्। तेन। विरोधिपरामर्शे स्वजन्यकार्याभावविशिष्टत्वनिवेशेने नेत्यर्थः। तत्रैव। वन्हिव्याप्यवान्वन्ह्यभावव्याप्यव्याप्यवानितिपरामर्शाभ्यांवन्हिमान्वन्ह्यभावव्याप्यवानित्यनुमितौ तत्रैव। विरोधिवन्हिसाध्यकपरामर्शेनेति। वन्हिव्याप्यवानितिपरामर्शमादायेत्यर्थः। वन्ह्यभावसाध्यकहेतोरिति। प्रतिहेतोरित्यर्थः। न सत्प्रतिपक्षितत्वमिति। वन्हिव्याप्यवानितिपरामर्शस्य जनितविरोधिबोधकत्वादितिशेषः। हेतोरिव प्रकृते प्रतिहेतोरपि सत्प्रतिपक्षितत्वं नेष्टं, पर्वतोवन्हिमानित्यनुमित्युदयात्। तथा च बाधोपस्थितिसमर्थपरामर्शोवन्हिव्याप्यवत्तापरामर्शः तत्कालीनस्वजन्यकार्याभावविशिष्टोवन्हभावव्याप्यवत्तापरामर्शः स्तद्विषयत्वादतिव्याप्तिरतोऽ जनितेत्यादिविशेषणम्।

अथवा स्वजन्यकार्याभावविशिष्टत्वमित्यत्र स्वपदग्राह्यः प्रतिहेतुपरामर्श एव, स्वजन्यमित्यस्यस्वप्रयुक्तत्वमर्थः तच्च कार्याभावे विशेषणम्। नन्वेवमपि वन्ह्यभावव्याप्यवत्तापरामर्शोत्तरं वन्हिमत्ताबुद्धेरनुत्पादात्स्वजन्यकार्याभावविशिष्टोवन्हिव्याप्यवत्तापरामर्शं इत्यतिव्याप्तिदुर्वारैव, विनिगमनाविरहेण सिद्धेरिव वन्ह्यभावव्याप्यवत्तापरामर्शस्यापि कार्याभावप्रयोजकत्वात्। अन्यथा वन्ह्यभावव्याप्यवत्तापरामर्शकार्यनिर्वन्हित्वानुमित्यभावं प्रति बाधस्य प्रयोजकत्वादेवोपपत्ते र्वन्हिव्याप्यवत्तापरामर्शस्याऽप्रयोजकतया स्वपरामर्शे (वन्हिव्याप्यवत्तापरामर्शे) विशेषणीभूताऽजनितविरोधिबोधकत्वस्य व्यर्थतापातादिति चेन्न। एकक्षणावच्छिन्नैकात्मवृत्तित्वसंबन्धेनैव वैशिष्ट्यस्य निवेशनीयतया यत्कालावच्छेदेनानुमित्यभावो न विद्यते तत्काले सत्प्रतिपक्षितत्वमस्त्यभावादिति ध्येयम्।

सत्प्रतिपक्षलक्षणवारणानुरोधादेवेति सत्प्रतिपक्षितत्वाभावादेवेति यावत्। अग्रिमलक्षणे इति। विरोधिबोधकान्यगमकतौपयिकरूपसंपत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं तत्वं इत्यग्रिमलक्षणेइत्यर्थः। बाधानुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणविषयतावद्ज्ञानविषयप्रतिरुद्धकार्यकपरामर्शविषयत्वं

विरोधिवोधकान्यगमतौपयिकरूपसंपत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं वा तत्वम् ।

तिपक्षप्रयोजकत्वानुपपत्तिः, अतः फलतोज्ञानविशेषणमिति । उक्तानुमितेरप्रामाणिकत्वेपि तदानींसत्प्रतिपक्षतोपगमेपि वाऽ ग्रिमलक्षणे विरोधिवोधकान्यत्वस्य नोक्तव्यावृत्तिसंगतिरतस्तन्मते व्यावृत्त्यन्तरमाह । एकस्येति । तद्वारणाय । अनुमित्युपधायकपरामर्शस्य सत्प्रतिपक्षितत्वप्रयोजकतावारणाय । तत् । विरोधिवोधकान्यत्वं । स्वजन्यविरोधिवोधाव्यवहितप्राक्क्षणविशिष्टं यत्तदन्यत्वार्थकं, स्वनिष्ठतादृशक्षणवैशिष्ट्यशून्यत्वार्थकं वा ।

तदर्थः । ज्ञायमानस्य प्रतिवन्धकतामतेनेदम् लक्षणम् । निरुक्तार्थकमिवि । अजनितविरोधिकत्वार्थकमित्यर्थः । वोधकत्वं वोधफलोपधायकत्वरूपं-विरोधिवोधाव्यहितप्राक्क्षणविशिष्टत्वाभाव इति यावत् । तथा चिवक्षणे चेति । गमतौपयिकरूपे विरोधिवोधकान्यत्वविवक्षणे चेत्यर्थः । समासनिविष्टतया यथाश्रुतस्य गमकतौपयिकरूपेणैव साकांक्षत्वादिति हृदयम् । यादृशव्याप्त्यादिमत्तया ज्ञानेन । वन्हभावव्याप्यवानितिज्ञानेन । प्रकृतसाध्यकपरामर्शशून्यस्य । वन्हिव्याप्यवानितिपरामर्शशून्यस्य । पुरुषान्तरस्येति । पुरुषभेदेपि व्याप्तेरैक्यादिति भावः । विरोध्यनुमितिर्जनिता । वन्हभाववानित्यनुमितिर्जनिता । तादृशव्याप्तिविषयकज्ञानान्तरस्यापीति । वन्हिव्याप्यवानितिज्ञानकालीनवन्ह्यभावव्याप्यवानितिज्ञानस्यापीत्यर्थः सत्प्रतिपक्षप्रयोजकत्वानुपपत्तिरिति । तादृशगमतौपयिकरूपस्य स्थलान्तरे विरोधिवोधकत्वादिति भावः । फलतः । उक्तसत्प्रतिपक्षत्वोपपत्तिरूपफलमनुरुध्य । ज्ञानविशेषणमिति । ज्ञायमानघटकज्ञानविशेषणमित्यर्थः । तथा च गमतौपयिकरूपस्यैक्येपि पुरुषभेदेन ज्ञानस्य भिन्नतया प्रकृतसाध्यसिद्ध्यौपयिकपरामर्शकालीनविरोधिपरामर्शस्य विरोधिवोधकान्यत्वात्तदुपपत्तिरिति भावः । उक्तानुमितेरप्रामाणिकत्वे । वन्हिमान्‌वन्ह्यभावव्याप्यवांश्चेत्यनुमितेरप्रामाणिकत्वे इत्यर्थः । तदानीं । अनुमितिकाले । नोक्तव्यावृत्तिसंगतिरिति । उक्तस्थले सत्प्रतिपक्षत्वोपगमे तद्वारणाय विरोधिवोधकान्यत्वविशेषणमनुचितमिति भावः । तन्मते । अगृहीताप्रामाण्यकत्वेन हेतुतामते । दीधितौ-एकस्येति । परामर्शस्येति शेषः । साध्यसिद्ध्यौपयिकपरामर्शस्येति यावत् । अपरेण । साध्याभावव्याप्यवानिति परामर्शेण । अनुमितिजननात् । वन्ह्यभावानुमितिजननात् । अनुमित्युपधायकपरामर्शस्य । साध्याभावानुमित्युपधायकपरामर्शस्य । सत्प्रतिपक्षितत्वप्रयोजकतावारणायेति । गमतौपयिकरूपसंपत्तिमत्तया विरोधिपरामर्शप्रति-

प्रतिरुद्धकार्यत्वं च प्रतिरुद्धकार्यकपरामर्शविषयत्वम् ।

नन्वेमपि यत्र प्रतिहेतुपरामर्शोविद्यते न तु प्रकृतहेतुपरामर्शः, अन्यत एव कुतश्चित्प्रतिबन्धकान्न तदग्रिमक्षणे विरोध्यनुमितिः, तदग्रिमक्षणेऽतिप्रसंगोदुर्वार एवेत्यत आह। प्रतिरुद्धेति। तथाच तत्र प्रकृतहेतुविशेषणीभूतपरामर्शविषयत्वाभावान्नातिप्रसंगः इति भावः।

नचैवमपि यत्र प्रकृतहेतुपरामर्शोगृहीताप्रामाण्यकः प्रतिहेतुपरामर्शश्चाऽगृहीताप्रामाण्यकोवर्तते, प्रतिबन्धकान्तरवशाच्चाग्रिमक्षणे विरोध्यनुत्पादः तदाऽतिप्रसंगोदुर्वार एव, प्रकृतहेतुपरामर्शेऽगृहीताऽप्रामाण्यकत्वस्य तन्नियतसाध्यसिद्धियोग्यताया वा निवेशे प्रतिहेतुपरामर्शे विरोधिबोधकान्यत्वस्य वैयर्थ्यमिति वाच्यम्। एतन्निवेशलाभायैव विरोधिबोधकान्यत्वस्योपादानात्।

रुद्धकार्यकत्वस्य धूमे सत्त्वादतिव्याप्तिवारणायेत्यर्थः। तथा च विरोधिपरामर्शेविरोधिबोधकत्वाद्वारणम्। स्वजन्येति। स्वं० विरोधिपरामर्शः तज्जन्योयो विरोधिबोध स्तदव्यवहितप्राक्क्षणवैशिष्ट्यस्यैव विरोधिपरामर्शे सत्वाद्वारणम्। वै० आधेयतासं०। ननु यत्र भाविज्ञानमप्रमा—ततोवन्हिव्याप्यधूमवान्—ततो वन्ह्यभावव्याप्यवानिति क्रमिकज्ञानत्रयं तत्राऽप्रामाण्यग्रहनाशक्षणे सत्प्रतिपक्षत्वं वह्निव्याप्यहेतोर्न स्यात् भेदस्याऽव्याप्यवृत्तित्वनये तदन्यत्वाऽसंभवादित्यत आह। स्वनिष्ठेति। स्वं० विरोधिपरामर्शः। तादृशक्षणवैशिष्ट्येति। विरोधिबोधाऽव्यवहितप्राक्क्षणवैशिष्ट्येत्यर्थः। एवं च विनश्यदवस्थवन्ह्यभावव्याप्यवत्तापरामर्शतोऽनुमितिसंभवेपि तादृशलक्षणवैशिष्ट्याभावस्याव्याप्यवृत्तितया नाव्याप्तिरिति भावः। प्रतिहेतुपरामर्शएवेति। विरोधिपरामर्शएवेत्यर्थः। एवकारेण स्वहेतुपरामर्शस्य व्यवच्छेदः। विद्यते इति। प्रतिरोधसंपादनाय। कुतश्चित्प्रतिबन्धकात्। प्रत्यक्षसामग्र्यादिरूपात्। तदग्रिमक्षणे। परामर्शाव्यवहितोत्तरक्षणे। न विरोध्यनुमितिः। न वन्ह्यभावानुमितिः। तत्र। परामर्शकाले। अग्रिमलक्षणे। विरोधिबोधकान्येत्यादिद्वितीयलक्षणस्येत्यर्थः। अतिप्रसंगोदुर्वार एवेति। विरोधिपरामर्शस्य तादृशक्षणवैशिष्ट्यशून्यत्वादिति भावः। प्रथमलक्षणस्य तत्र नातिव्याप्तिः, स्वहेतोः परामर्शविरहेण विरोधिपरामर्शप्रतिरुद्धकार्यकपरामर्शविषयत्वाभावादिति ध्येयम्। उपलक्षणत्वे दोषमाह। विशेषणीभूतेति। विषयतासंबन्धेन परामर्शवत्वाभावादित्यर्थः। प्रकृतहेतुपरामर्शोगृहीताऽप्रामाण्यकः। वन्हिव्याप्यधूमवान् पर्वत इति ज्ञानमप्रमा इतिज्ञानं। प्रतिहेतुपरामर्शश्चाऽगृहीताऽप्रामाण्यकः। वन्ह्यभावव्याप्यवान् इति परामर्शः। प्रत्यक्षसामग्र्यादिवशात्। अग्रिमक्षणे।

स्थापनायां व्याप्तिपक्षधर्मत्वमुभयवादिसिद्धं, वादिना तदभावानुपन्यासात्, द्वितीयस्य तत्वमन्यतराऽसिद्धमिति प्रथमेन द्वितीयं बाधितमिति स्वार्थाऽनुमाने एवाऽयं दोष इत्येके।

वस्तुतस्तु विरोधिबोधकान्यत्वं प्रकृतहेतुपरामर्शप्रतिरुद्धकार्यकत्वरूपं प्रतिहेतुपरामर्शविशेषणम्। गृहीताप्रामाण्यकप्रकृतहेतुपरामर्शाच्च न प्रतिहेतुपरामर्शकार्यप्रतिरोध इति तादृशपरामर्शदशायां नातिप्रसंगः।

विरोधिपरामर्शाव्यवहितोत्तरक्षणे। तत्र। परामर्शकाले। अतिप्रसंगो-दुर्वार एवेति। तत्र विरोधिपरामर्शस्य विरोधिबोधकान्यत्वात्, स्वहेतोश्च तत्प्रतिरुद्धकार्यकपरामर्शविषयत्वात् इति भावः। अगृहीताऽप्रामाण्यकत्वस्येति। अस्य निवेशे इत्यनेनाऽन्वयः। तथा च स्वहेतोरगृहीताऽप्रामाण्यकत्वविरहादतिव्याप्तिविरहेपीति शेषः। तन्नियतेति। अगृहीताप्रामाण्यकत्वव्याप्येत्यर्थः। साध्यसिद्धियोग्यताया वा इति। साध्यसिद्धिजनकतावच्छेदकधर्मवत्त्वरूपाया वा इत्यर्थः। निवेशे इति। तथा चाऽप्रामाण्यज्ञानास्कन्दितस्वपरामर्शस्य तादृशयोग्यताविरहादतिव्याप्तिविरहेपीति शेषः। वैयर्थ्यमिति। अगृहीताप्रामाण्यकसाध्यसिद्ध्यौपयिकपरामर्शकाले साध्याभावसाध्यकपरामर्शस्य नियमतो विरोधिबोधकान्यत्वात्।

अप्रामाण्याभावकूटनिवेशापेक्षया लाघवादाह। वस्तुतस्त्विति। गृहीताप्रामाण्यकप्रकृतहेतुपरामर्शाच्चेति। अप्रामाण्यज्ञानास्कन्दितवन्हिव्याप्यधूमवत्तापरामर्शादित्यर्थः। न प्रतिहेतुपरामर्शकार्यप्रतिरोध इति। न वन्ह्यभावव्याप्यवानिति परामर्शकार्यीभूतवन्ह्यभाववानित्यनुमितिप्रतिरोध इत्यर्थः। अगृहीताप्रामाण्यकस्यैव परामर्शस्य कार्यविरोधित्वादितिभावः। तादृशपरामर्शदशायां। गृहीताप्रामाण्यकपरामर्शदशायां। नातिव्याप्तिरिति। विरोधिपरामर्शे प्रकृतहेतुपरामर्शप्रतिरुद्धकार्यकत्वाभावादिति भावः। अत्रेदं बोध्यम्। एतल्लक्षणस्य परस्परानुमितिप्रतिबन्धरूपफलघटितत्वेन एतदुपरि मतान्तरं निरस्य तादृशप्रतिबन्धस्य फलताव्यवस्थापनसंगति मणिकाराणामित्यवधेयम्।

सत्प्रतिपक्षदोषस्य स्वार्थपरार्थानुमानदोषतां व्यवस्थापयितुं मतमुत्थापयति। स्थापनाया॰ इति। प्रकृतधूमादिहेतोरित्यर्थः। व्याप्तिपक्षधर्मत्वमिति। व्याप्तिसहितं पक्षधर्मत्वमित्यर्थः। उभयवादिसिद्धमिति। वादिप्रतिवाद्यनुमतमित्यर्थः। व्याप्तिपक्षधर्मत्वग्राहकं हेतुमाह। वादिनेति। प्रतिस्थापनावादिनेत्यर्थः। तदभावानुपन्यासादिति। व्याप्तिपक्षधर्मत्वाभावानुपन्यासादित्यर्थः। वाद्यनुद्भावितस्वाभावकत्वादित्यर्थः। द्वितीयस्य। प्रतिहेतोः। तत्वं। व्याप्ति-

तन्न। एकदा निरन्तरयोर्वोभयो र्व्याप्तिपक्षधर्मतया-ज्ञातयोः प्रतिपक्षत्वात् युगपदुपस्थितेश्च कारणवशेन स्वपर-साधारणत्वात् ।

एकदेत्यादि । न च द्वितीयस्य परामर्शस्योत्पादनसमये पूर्वेणानुमितिजन-नात्कथं नैरन्तर्यमिति वाच्यम् । साधकमानादिवशेन क्षणमनुमित्यनुत्पादसंभवात् । स्वपरेति । अयंभावः । न खलु संभवन्तः सर्वे एव हेत्वाभासाः समुद्भाव्याः, आधिक्यप्रसंगात् । परन्तु यथाकाममेकः, तथाच नाप्रतिषेधमात्रेण व्याप्त्याद्यभ्युपगम इति ।

मूले—एकदेत्यस्य-उत्पन्नयोरितिशेषः । अविरलक्रमेणोत्पन्नयो रित्यर्थकं निरन्तरयोर्वेति मूलमाक्षिपति । न चेत्यादिना । साधक-मानं- साध्यनिश्चयः । विरोधिपरामर्शानन्तरमपि यदि साधक-मानादिवशेनाऽनुमितिर्न जायते तदा तदनुरोधेन सत्प्रतिपक्षस्य दोषता नायातीत्यतः क्षणमिति । क्षणमेकमित्यर्थः । मूले—पक्षधर्मत्वम् । अन्यतरासिद्धमिति । प्रतिवाद्यसिद्धमित्यर्थः । स्थापना-वाद्यननुमतमिति यावत् । तेन तत्र तदभावं विहाय दूषणान्तरानुपन्यासादिति तत्वम् । प्रथमेन । स्थापनाहेतुना । व्याप्तिपक्षधर्मतयोरुभयवादिनिश्च-येनेति भावः । द्वितीयं । प्रतिस्थापनाहेतुः । बोधितमिति । व्याप्ति-पक्षधर्मत्वान्यतराभाववत्तया निश्चितमित्यर्थः । भ्रमत्वनियतविषयताकव्याप्त्यादिक-मिति यावत् । अयंदोषः । सत्प्रतिपक्षरूपोदोषः । तथा चानुमत्यननुमतिभ्यां-तुल्यबलतानिराकरणात्परार्थस्थले नायं दोष इति फलितम् ।

अप्रमात्वग्रहादेव तुल्यबलता इत्यभिप्रेत्य स्वार्थस्थले दूषकताबीजं व्युत्पाद्य तत्सत्त्वेन परार्थस्थले दोषतां व्युत्पादयति । एकदेति मूलम् । एकस्मिन् क्षणे इत्यर्थः । निरन्तरयोरिति । क्रमिकक्षणद्वयोरित्यर्थः । उभयोः । हेत्वोः । ज्ञातयोरित्यत्र भावे क्तः । ज्ञानयोरिति तदर्थः । प्रतिपक्षत्वादिति । तथा च एकस्मिन् काले क्रमिककाले वा हेतुद्वयधर्मिकव्याप्तिपक्षधर्मत्वप्रकारकज्ञानयोः प्रतिपक्षत्वादित्यर्थः । क्रमिकत्वं न संभवतीत्याशंकते । नचेति । विरोधि-परामर्शानन्तरमपीति । अपिना विरोधिपरामर्शक्षणस्य समुच्चयः । यथा विरोधिपरामर्शक्षणेऽनुमितिर्न जायते तथा विरोधिपरामर्शानन्तरक्षणेपि न जायतेतदेत्यर्थः । तदनुरोधेन । अनुमित्यनुत्पादानुरोधेन । नायातीति । सिद्धेरेव तत्र दोषत्वसंभवादिति भावः । साधकमानादीत्यादिपदेन विरोधिपरामर्श-सामग्र्या अपि संग्रहः । एवं च पर्वतोवन्हिमानिति सिद्धिः- ततो वन्हिव्याप्यवत्ता-

ज्ञातयोः—ज्ञानयोः। प्रतिपक्षत्वात्। परस्परकार्यप्रतिरोधकत्वात्। युगपदिति। यौगपद्यमेककालवृत्तित्वं, नतूत्पत्तिघटितं, द्वितीयपक्षासंग्राहकत्वात्। परामर्शद्वयसंवलनस्य स्वपरसाधारणत्वेपि परार्थस्थले व्याप्तिपक्षधर्मताभंगमुपेत्य सत्प्रतिपक्षोद्भावनेऽप्रतिषिद्धत्वेन प्रकृतहेतोर्व्याप्तिपक्षधर्मतयोः प्रतिवाद्यनुमतत्वग्रहणेन प्रमितत्वग्रहणान्नद्वयोस्तुल्यबलत्वमित्याक्षेपानुद्धाराद्भावं पूरयति। दीधितौ-अयंभाव इति। आधिक्यप्रसंगादिति। हेतुद्वयप्रयोगइवदोषद्वयोद्भावनेऽप्याधिक्यादिति भावः। यथाकाममित्यनेनोद्भावने विनिगमनाविरहशंका निराकृता। व्याप्त्याद्यभ्युपगमः। व्याप्त्यादेःप्रतिवाद्यनुमतत्वसिद्धिः। अप्रतिषिद्धत्वस्याऽभावानुद्भावनरूपस्यान्यथासिद्धतयाऽ नुमत्यनाक्षेपकत्वादिति भावः।

परामर्शः- ततो विरोधिपरामर्शः, तत्र सिद्धितुरीयक्षणेऽनुमित्यनुत्पादस्य विरोधिपरामर्शमात्राधीनतया तत्पूर्वक्षणे सत्प्रतिपक्षितत्वस्येष्टत्वादाह। क्षणैकमिति। तथा चैकत्वं विवक्षितमिति भावः। एवं च परार्थस्थले कथंयुगपत्परामर्शद्वयसंवलनमिति समाहितम्। प्रतिबन्धकवशेन यौगपद्यसंभवात्। मूले—व्याप्तिपक्षधर्मतयेति। साध्यतदभावनिरूपितव्याप्तिपक्षधर्मतयेत्यर्थः। ज्ञातयोरित्यत्र निष्ठाया विषयतार्थकत्वे बाधादाह। ज्ञानयोरिति। सत्प्रतिपक्षपदप्रवृत्तिनिमित्तमक्षतमेवेत्याह। परस्परेति। अत्र जगदीशेनाऽयं भाव इत्यादिग्रन्थः मूले परार्थस्थले युगपदुत्पन्नयोर्विरोधिपरामर्शयोः सत्प्रतिपक्षत्वव्यवस्थापनेपि क्रमोत्पन्नयोस्तयोस्तथात्वं नोपपादितमित्याशंकयाऽवतारितः सोयं महान्प्रलाप इत्याशयेनाह। यौगपद्यमिति। न तूत्पत्तिघटितमिति। एककालोत्पत्तिकत्वरूपमित्यर्थः। द्वितीयपक्षासंग्राहकत्वादिति। निरन्तरयोरिति पक्षासंग्राहकत्वादित्यर्थः। तयोरेककालोत्पत्तिकत्वाभावादिति यावत्। स्वार्थानुमानमात्रदोषताया एवाऽऽक्षेपे उक्तत्वात् परार्थस्थले युगपदुत्पन्नयोस्तयोस्तथात्वप्रदर्शनमात्रेणाऽऽक्षेपपरिहारसंभवात् क्रमोत्पन्नोत्कीर्तनंव्यर्थम्, नापि भावपूरणे क्रमोत्पन्नयोस्तयोस्तथात्वनिर्वाहोलभ्यते इत्यतः स्वयमाक्षेपमनूद्य भावं संगमयति। परामर्शद्वयेति। विरोधिपरामर्शद्वयेत्यर्थः अप्रतिषिद्धत्वेन। वाद्यनुपन्यस्तस्वाभावकत्वेनेति यावत्। प्रमितत्वं च प्रमात्वनियतविषयताश्रयत्वम्। तथा च प्रकृतहेतुवृत्तिव्याप्तिपक्षधर्मते वाद्यनुमते वाद्यनुपन्यस्तस्वाभावकत्वादित्यनुमानेनवाद्यनुमतत्वसिद्धौ तेन हेतुना प्रकृतहेतुवृत्तिव्याप्तिपक्षधर्मतयोः प्रमितत्वसिद्धिर्बोध्या। न द्वयोः। परामर्शयोः। तुल्यबलतेति। प्रकृतपरामर्शस्याधिकबलत्वात्। दीधितौ-सर्वे एवेति। समयबन्धं विनेत्यादिः। आधिक्यप्रसंगादिति। आधिक्यनामकनिग्रहप्रसंगादित्यर्थः। अत्राधिक्य-

अथ वस्तुनोऽद्व्यात्मकत्वेन व्याप्तिपक्षधर्मताभंग एकत्राऽऽवश्यक इति स एव दोषः ।

मूले—अद्व्यात्मकत्वेनेति । साध्यतदभावयोरेकतरवत्वेऽपराऽनधिकरणत्वनियमेनेत्यर्थः । व्याप्तीति । एकत्र । हेत्वोरन्यतरत्र । स्वस्वसाध्यनिरूपितव्याप्तिपक्षधर्मतयोरन्यतरभंग आवश्यक इति । स एव । अन्यरत्वोनोभयत्रावधारितो विशिष्य संन्दिग्धोदोष आस्तां किं प्रकरणसमस्य दोषतयेत्यर्थः ।

भियैव हेतौ व्याप्त्यादिविरहोनोपन्यस्यते, न चैतावता तस्याव्याप्त्यादिकं वादिसिद्धमिति । अनुपन्यस्तव्याप्त्यादिविरहस्य बाधकत्वायोगात्परार्थस्यलेपि क्रमोत्पन्नयोर्विरोधिपरामर्शयोर्दोषत्वं भवत्येवेति यज्जागदीश्यां भावपूरणं-तदिदमपेशलम् । क्रमोत्पन्नयोरिव युगपदुत्पन्नयोरपि दोषत्वे एतद्ग्रन्थस्याप्यपेक्षणीयतया-क्रमोत्पन्नमात्रे तदुत्पादनाभिप्राये दीधितिकृतां विक्षिप्तचित्तता स्यादिति ध्येयम् । हेतुद्वयप्रयोग इवेति । पर्वतोवन्हिमान्धूमात्आलोकादिति । निराकांक्षत्वस्याविशिष्टतालाभाय दृष्टान्तः । ननु व्याप्तिपक्षधर्मताविरह एव कथं नोद्भावितइत्यतआह । परन्त्विति । यथाकाममेक इति । अत्र वचनविपरिणामेन समुद्भाव्य इत्यनुषंजनीयम् । यथाकाममितिक्रिया विशेषणम् । तदुद्भावने । व्याप्तिपक्षधर्मताविरहोद्भावने । तथा च कामनाविरहादेवान्यस्य नोद्भावनं न तु तदसत्वात्तदनुद्भावनमितिसूचितम् । तथा चेति । नाऽप्रतिषेधमात्रेणेति । प्रकृतहेतोर्व्याप्तिपक्षधर्मतयोरित्यादिः । अभावानुद्भावनरूपस्येति । प्रतिवाद्यनुद्भावितस्वाभावकत्वरूपलिंगस्येत्यर्थः । अन्यथासिद्धतयेति । वाद्यनुमतत्वव्यभिचारितयेत्यर्थः । कामनाविरहसिद्धतया इति कश्चित् । अनुमत्य नाक्षेपकत्वादिति । वाद्यनुमतत्वासाधकत्वादित्यर्थः ।

स्वार्थानुमानेपि दोषान्तरसांकर्यात्सत्प्रतिपक्षस्य न दोषतेत्यभिप्रायेणाऽऽशंकते । अथेति । साध्यतदभावयोः परस्परविरुद्धत्वग्रहदशायामेव वक्ष्यमाणरीत्या व्याप्त्यादिभंगावधारणमतस्तद्विरुद्धत्वप्रदर्शकमूलं व्याचष्टे । साध्यतदभावयोरिति । साध्याभावे साध्यव्यापकीभूताभावप्रतियोगित्वं-साध्ये साध्याभावव्यापकीभूताभावप्रतियोगित्वं चाऽक्षरलभ्यं साध्यतदभावयोः परस्परविरुद्धत्वमिति स्पष्टार्थः । व्याप्त्यादिभंगावधारणस्यानुमानिकतया पक्षसाध्यादिकं परिस्फुर्वन्पूरणसंवलितार्थमाह । एकत्रेत्यादि । एकत्रेति पक्षप्रतीकधारणम् । अन्यतरभंगः । व्याप्तिपक्षधर्मत्वाभावान्यतरवत्वम् । तथा च परार्थस्थलेपि परामर्शद्वयसंवलनोत्तरं हेतु-प्रतिहेत्वन्यतरत् स्वस्वसाध्यव्याप्त्यभावपक्षधर्मत्वाभावान्यतरवत् विरुद्धद्वयसाधकत्वादितिरीत्या सर्वत्रानुमानमस्त्येवेति भावः । हेतौ व्याप्तिलाभाय आवश्यक इत्युक्तम् । स एव । भंग एव । पक्षतावच्छेद-

साध्यतदभावयोर्यौ व्याप्तौ तयोरेकधर्मिणि सत्वमनुपपन्नं धर्मिवृत्तौ एकतरव्याप्त्यभावं तदा कल्पयति यदि एकतरव्याप्त्यभावं विना तन्नोपपद्यते इत्यवधारयितुं शक्यते। तदेव न–उभयत्र व्याप्तिसत्वेपि साध्यतदभावौ यद्यविरुद्धौ स्यातां तदा उभयत्र पक्षधर्मता निर्वहतीति प्रतिसन्धानेन तद्विघटनादिति सामान्यतोपि न व्याप्तिभंगावधारणमिति कथमज्ञायमानस्य दोषतेत्याशंकते न च तयोरिति। साध्यकावच्छेदेनानुमित्यात्मकस्य सदसद्धेतुभेदेन प्रमाभ्रमरूपावधारणस्य लाभाय उभयत्रेति। तेन सद्धेतौ दोषाभावात्तत्साध्यकानुमितिर्दुर्वारा इत्यपास्तम्। अन्यतरत्वेनैव भंगस्य व्यापकत्वात् विशिष्य निर्धारणाऽसंभवादन्यतरत्वेनेत्युक्तम्। पक्षे हेतौ विशिष्य निर्धारणाऽसंभवात् (साध्ये) अन्यतरत्वेनेत्युक्तम्। हेतौ विशिष्य सन्दिग्धस्य दोषत्वायोगादवधारणानुसरणम्। दोषता च विशेषरूपेणेति सन्देहानुधावनम्। विशिष्य। विशेषधर्मं धर्मितावच्छेदकीकृत्य। दोषः। परस्परानुमित्यनुत्पादप्रयोजकः। व्याप्तौ। व्याप्यत्वेन गृहीतौ। तयोः। साध्यतदभावव्याप्ययोः। एकधर्मिणि सत्वं। एकधर्मिवृत्तित्वं। धर्मिवृत्तौ। हेतौ। तत्। साध्यतदभावव्याप्ययोरेकधर्मिवृत्तित्वम्। तयोरेकधर्मिवृत्तित्वं व्याप्त्यभावं विनाऽनुपपन्नं "व्याप्तिव्यापकीभूताभावप्रतियोगि" इत्यर्थः। तदेव न साध्यतदभावव्याप्ययोरेकधर्मिवृत्तित्वं नाऽनुपपन्नम्, तथा च पक्षधर्मत्वाभावः स्वस्वसाध्यव्याप्ति-व्यापकत्वान्यतरवान्‌इत्यनुपपत्तिज्ञानं-हेतुप्रतिहेत्वन्यतरः पक्षधर्मः इति ज्ञानसहितमेव हेतुप्रतिहेत्वन्यतरः तत्तत्साध्यव्याप्त्यभावान्यतरवानित्यनुमितिजनकं वाच्यम्, तच्च न संभवतीत्यर्थः। असंभवे हेतुमाह। उभयत्रेति। साध्यतदभावव्याप्ययोः। निर्वहतीति। यथा पीनोऽयं देवत्तो दिवा न भुंक्ते इत्यत्र पीनत्वंरात्रिभोजित्वकल्पकं नेह तथा-व्याप्त्यभावं विनापि साध्यतदभावव्याप्ययोरेकत्रधर्मिवृत्तित्वमुपपद्यतेइतिभावः। तद्विघटनादिति। साध्यतदभावव्याप्ययोरेकधर्मिवृत्तित्वं व्याप्त्यभावंविनाऽनुपपन्नम् इतिअनुपपत्तिविघटनादित्यर्थः। वस्तुतो विरुद्धयोरपि साध्यतदभावयोरविरोधग्रहकालीनेनोभयत्रव्याप्तिसत्वे उभयत्र पक्षधर्मतानिर्वहतीत्येतादृशव्यभिचारज्ञानेन तादृशानुपपत्तिविघटनात्। सामान्यतोऽपि। अन्यतरत्वेनापि। न व्याप्त्यादिभंगावधारणमिति। न व्याप्तिपक्षधर्मताविरहनिश्चय इत्यर्थः। अज्ञायमानस्य। व्याप्तिपक्षधर्मताविरहस्य। दोषता। अनुमित्यनुत्पादप्रयोजकता। दोषोद्भावनस्यैवानुमितिप्रतिबन्धकत्वं न तु दोषस्येत्यतोऽज्ञायमानस्येत्युक्तम्। दीधितौ तयोः। साध्यतदभावयोः। विरोधभंगेपि। विरोधित्वाग्रहदशायामपि। उपपत्तेः। व्याप्तिपक्षधर्मत्वोपपत्तेः। अविरोधे। विरोधित्वाग्रहे। अनुमित्यप्रतिरोधादिति। तत्र समुच्चयात्मकानुमितेरिष्टत्वादित्यर्थः। तथा च। विरोधावधारणे।

न च तयोर्विरोधभंगेऽप्युपपत्तेर्न व्याप्त्यादिभंगनियम इति वाच्यम्। अविरोधेऽनुमित्यविरोधात्। विरोधे व्याप्त्यादिभंग-नियमादिति चेन्न। प्रतिरुद्धत्वज्ञानानन्तरं व्याप्त्यादिभंगज्ञान-मित्युपजीव्यत्वेन व्यभिचारवदस्यापि दोषत्वात्।

ननु साध्यतदभावयोरिव तद्व्याप्यत्वेनावधारितयोर्विरोधा-देकत्र न निश्चयः-किन्तु संशयः, निश्चये वाऽन्यतरव्याप्तिसंशय इति व्याप्यत्वासिद्धिरिति चेन्न। उभयोरेकत्र निश्चयानन्तरं अन्यतरव्याप्तिसंशय इत्युपजीव्यत्वेनाऽस्य भिन्नत्वात्।

तदभावयोरविरोधग्रहदशायामनुमित्यप्रतिरोधान्न सत्प्रतिपक्षता अपि तु विरोधावधारणदशायामेव, तथा-चोक्तान्यथासिद्धिसंभावना-विरहादनुपपत्त्यवधारणं न दुर्घटमित्याह। अविरोधे इति। प्रतिरुद्धत्वस्य कार्यानुत्पादरूपस्यादोषतया प्रतिरुद्धत्वेत्यादियथाश्रुत-मूलस्याऽसंगतिरतोऽव्याचष्टे। प्रतिरुद्धत्वेतीति।

एकत्र धर्मिणि मिथोविरुद्धयोः साध्यतदभावव्याप्ययो र्व्याप्यत्वेन ज्ञानं यदि निश्चयरूपं स्यात्तदा परस्परप्रतिबन्धेन नोत्पद्यत एव, अतोव्याप्त्यंशे पक्षधर्मतांशे वा संशयरूपमेवतत्. तथा च कारणी-भूतनिश्चयाभावादेव नानुमित्युत्पादः, न तु सत्प्रतिपक्षभावादित्याक्षेपे "उभयोरेकत्र निश्चयानन्तर" मित्यादिना विरोधिद्वयव्याप्यवत्ता-निश्चयस्य व्याप्त्यादिसंशयोपजीव्यत्वाभिधानं न संगच्छते, तादृश-निश्चयस्यैवानुपपादितत्वादतोभावमाह। परस्परेति। साध्यतद्-

उक्ताऽन्यथासिद्धिसंभावनाविरहादिति। साध्यतदभावौ यद्यविरुद्धौस्या-तामित्यन्यथासिद्धिसंभावनाविरहादित्यर्थः। अनुपपत्त्यवधारणमिति। साध्यतदभावव्याप्ययोरेकधर्मिवृत्तित्वं एकतरव्याप्त्यभावं विनाऽनुपपन्नमित्यनुपपत्त्य-वधारणमित्यर्थः। मूले प्रतिरुद्धत्वज्ञानानन्तरमिति। परामर्शद्वयसंवल-नोत्तरमित्यर्थः। तथाचाऽस्यापिदोषत्वादिति मूलस्यविरोधिव्याप्त्यादेरनुमित्य-नुत्पादप्रयोजकत्वादित्यर्थः। व्यभिचारवदिति। व्याप्तिभंगज्ञानोपजीव्यत्वेन-यथाव्यभिचारस्य दोषत्वमित्यर्थः। पुनः शंकते। नन्विति। साध्यतदभा-वयोरिवेति। एकत्र न निश्चयइत्यत्र दृष्टान्तः। तद्व्याप्यत्वेनेति। साध्यतदभावव्याप्यत्वेनेत्यर्थः। नोत्पद्यते एवेति। अस्य व्याप्यत्वेन ज्ञानमिति-पूर्वेणान्वयः। तथा च धूमवत्ताज्ञानं प्रति वन्हौ धूमव्यापकताज्ञानसहितं

दूषकताबीजं तु समबलविरोधिसामग्रीप्रतिबन्धेन निर्णया-
जनकत्वम् । ननु व्याप्ति पक्षधर्मता विरह एव-सद्धेतावपि
सन्दुतिपक्षत्वात्

प्रतिरुद्धत्वेति । प्रतिरोधप्रयोजकविरोधिव्याप्त्यादीत्यर्थः । उभयोरिति । परस्पराभावव्याप्यत्वं हि हेत्वोर्विरोधः । तदग्रहे तयोरेकत्र निर्णयोन विरुध्यते इति भावः ।

दूषकतेति । विरोधिपरामर्शसत्वे नियमेन परामर्शान्तरादनुमित्यनुत्पादः तस्यानुमितिविरोधित्वं कल्पयति । न तु तेन ज्ञाप्यमानस्य व्याप्त्यादिविरहस्य, सद्धेतावपि तस्यानुमितिविरोधित्वादित्यर्थः ।

भावव्याप्यत्वं हि हेत्वोः, साध्याभावसाध्ययोरेव विरोधः, न तु परस्परंतयोः, परस्परविरुद्धत्वेनज्ञातयोरेव नैकदा निश्चय इति तदग्रहे परस्परव्यापकविरुद्धत्वेन ग्रहेपि हेत्वोरेकत्र निश्चयः संभवत्येवेत्यर्थः ।

दूषकताबीजमित्यादिग्रन्थस्य दूषकत्वं निग्रहप्रयोजकत्वं दुष्टत्वमिति यावत्, एतादृशार्थपर्यालोचनया विरोधिपरामर्शप्रतिबन्धेनाऽतदभावव्याप्यपाषाणमयत्ववत्ताज्ञानं प्रतिबन्धकम् । पाषाणमयत्ववत्ताज्ञाने च वन्ह्यभावे पाषाणमयत्वव्यापकताज्ञानसहितं वन्हिव्याप्यधूमवत्ताज्ञानं प्रतिबन्धकमित्यभिमानः । किन्तु संशय इति । अत्र संशयपदं पक्षधर्मतासंशयपरम् । निश्चये । पक्षधर्मतानिश्चये । व्याप्यत्वासिद्धिरिति । व्याप्यत्वनिश्चयाभाव इत्यर्थः । तत् । व्याप्यत्वेन ज्ञानम् । तथा च । संशयरूपत्वे च । निश्चयाभावादेवेति । व्याप्यनिश्चयाभावादेवेत्यर्थः । एवकारव्यवच्छेद्यमाह । न त्विति । पूर्वं व्याप्त्यभावज्ञानेनान्यथासिद्धेर्निराकरणेपि व्याप्तिनिश्चयाभावेनान्यथासिद्धिनिराकरणान्न पौनरुक्त्यम् । तादृशनिश्चयस्यैव । व्याप्यनिश्चयस्यैवेत्यर्थः । साध्यतदभावव्याप्यत्वं हि हेतोरिति । हेतुवृत्तिसाध्यतदभावव्याप्यत्वं हीत्यर्थः । न तु परस्परं तयोः । साध्यतदभावव्याप्ययोः । तदभावव्याप्यवत्ताज्ञानस्यतद्वत्ताज्ञानविरोधित्वेपि तद्व्याप्यवत्ताज्ञानाविरोधित्ववत्तद्व्यापकीभूताभाववत्ताज्ञानस्य तद्वत्ताज्ञानविरोधित्वेपि तद्व्यापकीभूताभावव्याप्यवत्ताज्ञानस्याऽविरोधित्वमिति भावः । परस्परविरुद्धत्वेन ज्ञातयोरेवेति । साध्यतदभावयोरेवेत्यर्थः । एकदा । एककाले । एवकारव्यवच्छेद्यमाह । तदग्रहेणेति । हेत्वोःपरस्परविरुद्धत्वाग्रहेणेत्यर्थः । परस्परव्यापकविरुद्धत्वेन ग्रहेपीति । परस्परसाध्यतदभावविरुद्धत्वेन ग्रहेपीत्यर्थः । दीधितौतद्ग्रहेचेति । परस्पराभावव्याप्यवत्ताग्रहे चेत्यर्थः तयोः । परस्पराभावव्याप्ययोः । दूषकताबीजमित्यादि ग्रन्थस्येति । ग्रस्य एतादृशार्थपर्यालोचनयेत्यत्रान्वयः । निग्रहप्रयोजकोदुष्टस्तद्धर्मोदुष्टत्वमित्याह । दुष्टत्वमिति यावदिति । विरोधिपरामर्शेति । तथा च

नुमित्यजनकत्वं सत्प्रतिपक्षस्थले हेतोर्दुष्टताप्रयोजकं, न तु निर्णया-जनकत्वमात्रं विरोधिपरामर्शशून्यतादशायामपि कारणविरहेणा-नुमित्यजनकतया सद्धेतोर्दुष्टतापत्तेः। नापि विरोधिपरामर्शज्ञाप्य-मानो व्याप्तिपक्षधर्मताविरहः। सद्धेतौ तदसत्त्वेन विरोधिपरामर्श-संवलनदशायामपि तस्य दुष्टत्वानुपपत्तेः, विरोधिपरामर्शप्रयुक्त-व्याप्त्यादिभंगज्ञानं भ्रमप्रमासाधारणं वा सद्धेतुसाधारणदुष्टता-प्रयोजकमित्यर्थोऽनित्यदोपानभ्युपगन्तृमते न संभवतीति तमन्यथा-व्याचष्टे। विरोधीत्यादिना।

समानवलसामग्रीप्रतिवन्धेन निर्णयाजनकत्वमिति मूले सामग्री-पदं विरोधिपरामर्शपरं, प्रतिवन्धपदं नियमपरं। विशेषणे तृतीया। निर्णयाजनकत्वमनुमित्यनुत्पादः। तथा च विरोधिपरामर्शनियतोऽ-नुमित्यनुत्पाद इति समुदायार्थः। नियमश्च व्यापकत्वमित्याशयेन विरोधिपरामर्शसत्त्वे नियमेनानुमित्यनुत्पाद इति व्याख्यातम्। तस्य। विरोधिपरामर्शस्य। विरोधित्वं कल्पयतीति। एवं च दूषकतापदं विरोधिपरामर्शनिष्ठप्रतिवन्धकतापरम्, वीजपदं च कल्पकार्थकं वोध्यम्।

मूले सामग्रीपदं परामर्शपरमिति ध्येयम्। प्रतिवन्धेनेत्यन्तोपादानफलमाह। नन्विति। निर्णयाजनकत्वमात्रमिति। मात्रपदेन विरोधिपरामर्शेनेत्यस्य व्यावृत्तिः। सद्धेतोरिति। असद्धेतोरिष्टापत्तिः कर्तुं शक्यते इत्यतः सद्धेतोरित्युक्तम्। विरोधिसामग्रीप्रतिवन्धेनेनिर्णयाजनकत्वमिति मूलव्याख्यानावसरे एव पक्षधर्मताविरह इतिमूलं व्याचष्टे। नापीति। दुष्टता-प्रयोजक इति विपरिणतमनुपज्यते अन्यज्ञाप्यमानस्यप्रकृतदुष्टताप्रयोजकत्वाभावात्पूर-यति। विरोधिपरामर्शज्ञाप्यमान इति। तदसत्त्वेन व्याप्तिपक्षधर्मता-विरहाऽसत्त्वेन। तस्य। सद्धेतोः। एकत्र व्याप्तिभंगेति मूलं व्याचष्टे। विरोधिपरामर्शेति। भ्रमप्रमासाधारणं। भ्रमप्रमीयविपयतासाधारणं। दूपयति। अनित्यदोपानभ्युपगन्तृमते इति। तं। दूपकत्वं। विरोधिपरामर्शाऽ-सत्त्वेपि वावादिवशादनुमित्यनुत्पादसंभवेनाऽव्याप्यत्वादाह। नियमश्चेति। विरोधिपरामर्शव्यापकः परामर्शान्तरादनुमित्यनुत्पाद इति यावत्। कल्पयतीति। तथा च विरोधिपरामर्शः प्रकृतानुमितिप्रतिवन्धकः स्वव्यापकानुत्पादप्रतियोगि-प्रकृतानुमितिकत्वादित्यनुमानं, विरोधिपरामर्शः परामर्शान्तरादनुमितिविरोधी परामर्शान्तरादनुमित्यनुत्पादव्याप्यत्वादित्यनुमानं वा वोध्यम्। विरोधिपरामर्श-प्रतिवन्धकताकल्पकत्वरूपेति। विरोधिपरामर्शः प्रकृतानुमितिप्रतिवन्धकः

अत्र दूषकताबीजमित्यस्यानुषंगेण व्याप्तिपक्षधर्मताविरहो न दूषकताबीजमित्यर्थो लभ्यते, स चाऽसंगतः, व्याप्तिपक्षधर्मताविरहस्य विरोधिपरामर्शप्रतिबन्धकताकल्पकत्वरूपदूषकताबीजत्वाप्रसक्तेः, अतो-व्याप्तिपक्षधर्मताविरह इत्यनन्तरं विरोधिपरामर्शकालीनानुमित्य-नुत्पादकल्प्यप्रतिबन्धकताक इति पूरणीयमित्याशयेन व्याचष्टे। नत्विति। व्याप्त्यादिविरहस्य स्वरूपतोदोषत्वाप्रसक्तेरन्यज्ञाप्यमानस्य तथात्वे च विरोधिपरामर्शस्यानुपयोगितयातदसंवलनदशायामपि-सत्प्रतिपक्षत्वापत्तिरतोन त्वित्यनन्तरं तेन ज्ञाप्यमान इति पूरणीय-मित्याशयेन व्याचष्टे। तेनेति। सद्धेतावपि। व्याप्तिविरहशून्येपि। एतादृशमूलप्रतीकानन्तरंपूरयति। तस्येति। विरोधिपरामर्शस्येत्यर्थः। सत्प्रतिपक्षत्वादिति मूलस्यव्याख्या अनुमितिविरोधित्वादिति।

व्याप्तिपक्षधर्मताविरहज्ञापकत्वादित्यनुमानरूपेत्यर्थः। दूषकताबीजत्वाऽप्रसक्ते-रिति। परामर्शस्याऽप्रतिबन्धकत्वेपि व्याप्तिपक्षधर्मताविरहोपपत्तेरिति भावः। एतन्मतेऽनुमित्यनुत्पादस्य विरोधिपरामर्शाऽप्रयुक्ततया कालीनेति। तथात्वेन ज्ञायमानः स्वनिष्ठसाध्यव्याप्त्यादिविरहः तत्साध्यकानुमितिप्रतिबन्धकः विरोधि-परामर्शकालीनतत्साध्यकानुमित्यनुत्पादकत्वात्, एवं च विरोधिभूतोयोवह्निव्याप्य-वत्तापरामर्शः तत्कालीननिर्वह्नित्वानुमित्यनुत्पादः तेन ज्ञायमानस्य पाषाणमयत्वादि-निष्ठव्याप्त्यादिविरहस्य प्रतिबन्धकत्वं प्रकल्पयतीत्यर्थः। दीधितौ-व्याप्त्यादि-विरहस्येति। अनुमितिविरोधित्वंकल्पयतीति पूर्वेणान्वयः। दोषत्वाप्रसक्तेः। प्रतिबन्धकत्वाऽप्रसक्तेः। इदन्तु ज्ञाप्यमान इत्यस्य प्रयोजनम्। तेनेत्यस्य प्रयोजनमाह। अन्येति। तेन। विरोधिपरामर्शेण। ज्ञाप्यमान इति। तथा चाऽनुमित्यनुत्पादकल्प्यप्रतिन्वधकताको विरोधिपरामर्शज्ञाप्यमानव्याप्तिपक्ष-धर्मताविरह इति समुदितार्थः। व्याप्त्यादिविरहस्याऽप्रतिबन्धकत्वं कुत इत्या-कांक्षायां। सद्धेतावपीति। अनेन भवदभिमतप्रतिबन्धकस्याऽसत्वमेव प्रतिपाद्यते। हेतुनिष्ठव्याप्त्यादिविरहस्यैव विरोधित्वात्। ज्ञायमानहेतुनिष्ठ-व्यभिचारप्रतिबन्धकतामते इव हेत्ववगाहिज्ञानविषयव्याप्त्यादिविरहस्यविरोधित्वो-पगमेपि हेतौ व्याप्तिज्ञानकाले तदसत्वं बोध्यम्। अनुमितिविरोधित्वादिति। तथा च सद्धेतोः सत्प्रतिपक्षत्वानुपपत्तिरितिभावः।

सद्धेतौ व्याप्त्यादेर्विरहस्याऽसंभवादिति यावत्। पक्षधर्मताभंगानुक्तया मूलस्य न्यूनतामपाकुर्वन्नाह। व्याप्त्यादीति। तथाच मूले व्याप्तिभंगेत्यत्र व्याप्तिपदमनुमित्यौपयिकपरमिति भावः। अनास्थायां हेतुमाह। प्राथमिकेति। प्रथमक्षणवृत्तीत्यर्थ। व्याप्त्यादिभंगज्ञानोत्पत्तिक्षणवृत्तीति यावत्। अन्यथा। विरोधिपरामर्शस्य साक्षादप्रतिबन्धकत्वे। उदीच्यतया। उत्तरकालीनतया।

## एकत्र व्याप्तिभंगज्ञानद्वारा वाऽस्य दूषकत्वम् ।

व्याप्त्यादिविरहज्ञानद्वारा अस्य दूषकत्वमाह । एकत्रेति । वाकारोऽना-स्थायाम् । प्राथमिकानुमितिप्रतिरोधेनैव तथात्वात्, परमुखनिरीक्षकत्वेन तद्विषयस्याऽऽभासत्वायोगाच्चेति ।

दूषकत्वं–विरोधिपरामर्शस्यानुमितिविरोधित्वम् । एतन्मतस्य-दूष्यत्वाद्वाकारमनिर्भरसूचकतया व्याचष्टे । वाकार इति । अनुमितिप्रतिरोधेन । अनुमित्यनुत्पादानुरोधेन । विरोधिपरामर्शस्य तथात्वात् । साक्षादेवप्रतिबन्धकत्वात् । अन्यथा व्याप्ति-भंगज्ञानस्योदीच्यतया साक्षादनुमित्यविरोधितया च विरोधिपरामर्श-संवलितपरामर्शात्प्रथममनुमितिर्जन्येतैव बाधकविरहादिति भावः । परंपरया व्याप्तिज्ञानविरोधित्वं न हेत्वाभासतायामुपयुज्यते इत्याह परेति ।

ननु • व्याप्तिभंगज्ञानस्य साक्षादनुमितिविरोधित्वे कार्यकालवृत्तितया प्रतिबन्धकत्व-मावश्यकं तथा च व्याप्तिभंगज्ञानोत्पत्तिकाले नापत्तिसंभवइत्यत आह साक्षादनुमित्यविरोधितया चेति । तथा च साक्षात्प्रतिबन्धकत्वमेव नास्तीतिभावः । प्रथमं । व्याप्त्यादिभंगज्ञानोत्पत्तिक्षणे । अनुमितिर्जन्येतैवेति । अनुमितिः स्यादित्यर्थः । विरोधिपरामर्शाभ्यां व्याप्त्यादिभंगकल्पनादशायामप्य-नुमितेरनुत्पत्त्या प्राथमिकेन साक्षादनुमितिप्रतिरोधेनैव तयोर्दूषकत्वादिति भावः । परंपरया । व्यभिचारोत्थापकतया । दीधितौ-तद्विषयस्य । विरोधिपरामर्श-विषयस्य आभासत्वायोगाच्चेति । अनुमितेस्तत्करणज्ञानस्य वा साक्षाद्विरोधिन एव हेत्वाभासत्वात्, अन्यथोपाधेरपि तथात्वापत्तेरिति भावः । इदमुपलक्षणम् । व्याप्त्यादिविरहज्ञानस्य साक्षादनुमितिप्रतिबन्धकत्वे मानाभावाच्चेत्यपि द्रष्टव्यम् । प्रथमपक्षे । विरोधिसामग्रीप्रतिबन्धेन निर्णयाजनकत्वमिति पक्षे । अनुमिति-विरोधित्वे । तद्वत्ताबुद्धिप्रतिबन्धकत्वे इति यावत् । अनुमितिमात्रविरोधित्वे । उपनीतप्रत्यक्षशाब्दादिप्रतिबन्धकत्वमपि न स्यादिति भावः । तस्याः । विरोध्यनुमितिसामग्र्याः । इत्याशंक्येति । पीतत्वाभावव्याप्यवान् शंखः इति निश्चयसत्वे. घटाभावव्याप्यवद्भूतलमिति निश्चयसत्वे च दोषसत्वे लौकिकसन्निकर्षसत्वे च पीतःशंख इति घटवद्भूतलमितिधीश्च जायते तयोरनुप-पत्तिमाशंक्येत्यर्थः । प्रत्यक्षसामग्र्या बलवत्वमित्यर्थकतयेति । प्रत्यक्ष-सामग्र्या बलवत्वेतु अनुमितिसामग्र्यन्तर्गतप्रत्यक्षसामग्र्यभावरूपकारणाभावादेव विरोधिसामग्र्यभावान्न प्रत्यक्षविरोध इति भावः । प्रत्यक्षसामग्रीतो बलवत्वादिति । घटप्रत्यक्षं प्रति घटातिरिक्तविषयकानुमितिसामग्रीत्वेन प्रति-बन्धकत्वादितिभावः । एकत्रेत्यादि पक्षे एवेति । एकत्रव्याप्तिभंगज्ञानद्वारा

चक्षुरादेश्च नानुमानेन प्रतिरोधः, तदुपस्थितावपि फलदर्शनेन तस्याऽधिकबलत्वात्।

ननु विरोधिपरामर्शो यदि विपरीतनिर्णयविरोधि, कथं तर्हि विशेषदर्शने नयनादिजन्मा पीतत्वादिभ्रम इत्यत आह। चक्षुरादेश्चेति,चस्त्वर्थः।

प्रथमपक्षे विरोध्यनुमितिसामग्र्या अनुमितिविरोधित्वे प्रत्यक्षप्रतिबन्धकत्वमपि तस्याः स्यात्, विरोधिज्ञानसामग्रीत्वाविशेषात् इत्याशंक्य चक्षुरादेश्चेत्यादिग्रन्थमवतार्य फलानुरोधेन प्रत्यक्षसामग्र्या बलवत्त्वमित्यर्थकतया व्याख्यानमयुक्तं, भिन्नविषयेऽनुमितिसामग्र्याः प्रत्यक्षसामग्रीतोबलवत्वाद् अत एकत्रेत्यादि पक्षे एव व्याप्तिभंगज्ञानद्वारा व्याप्तिसापेक्षप्रमाणे एव दूषकता संभवतीति चक्षुरादेरतथाभूततया तत्प्रतिरोधकत्वं विरोधिपरामर्शस्य न स्यादित्याशंकया चक्षुरादेश्चेतिफक्किकामवतार्य इष्टापत्तिपरतया मिश्राः व्याख्यातवन्तः। तत्र विरोधिपरामर्शस्य लौकिकचाक्षुषाद्यप्रतिबन्धकत्वेऽप्युपनीतभाने जननीये चक्षुरादेः शब्दस्य च प्रतिरोधकतायां कथंताया अनिवृत्तेः, स्वयं विशिष्टबुद्धौ तदभावव्याप्यवत्ताबुद्धेः साक्षात्प्रतिबन्धकतया दूषकत्वे निर्भरस्य वर्णितत्वात्तादृशप्रतिबन्धकत्वानुपपत्तिशंकयैव तादृशमूलमवतारयति। नन्विति।

वा अस्य दूषकत्वमिति पक्षे एवेत्यर्थः। एवकारेण प्रथमपक्षव्यावृत्तिः। एतत्कल्पे विरोधिपरामर्शस्य न साक्षाद्विरोधित्वमस्तीति न दोषः। व्याप्तिसापेक्षप्रमाणे एवेति। अनुमितावेवेत्यर्थः। अतथाभूतयेति। चाक्षुषादेर्व्याप्तिसापेक्षप्रमितिभिन्नतयेत्यर्थः। तत्प्रतिरोधकत्वं। चाक्षुषादिप्रतिबन्धकत्वं। न तत्र विरोधिपरामर्शस्य प्रतिबन्धकत्वसंभव इत्यर्थः। इष्टापत्तिपरतयेति। प्रत्यक्षाप्रतिबन्धकत्वे इष्टापत्तिपरतयेत्यर्थः। तत्र। प्रथमपक्षे। लौकिकचाक्षुषाद्यप्रतिबन्धकत्वेपीति। विरोधिपरामर्शप्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाऽजन्यत्वनिवेशेपीत्यर्थः। चक्षुरादेः। चाक्षुषादेः। शब्दस्य। शाब्दस्य। प्रतिरोधकतायां। प्रतिबन्धकतायां। कथंतायाः। जिज्ञासायाः। अनिवृत्तेरिति। विरोधिसामग्रीत्वाविशेषादिति भावः। तादृशप्रतिबन्धकत्वानुपपत्तिशंकयैवेति। विरोधिपरामर्शस्य प्रतिबन्धकत्वानुपपत्तिशंकयैवेत्यर्थः। तादृशमूलम्। चक्षुरादेश्चेतिमूलम्। तथा च लौकिकसन्निकर्षाऽजन्यत्वमिव दोषविशेषाजन्यत्वमपि तत्प्रतिबध्यतावच्छेदककोटौ निवेशनीयमिति भावः। प्रवृत्तिनिमित्तस्य बलसामान्यघटिततया शङ्खादिबलप्रवेशस्याऽप्रत्याख्येयतया तत्प्रस्तावसदतिव्याप्तिः प्रदर्शिता, अत एव व्याप्तिपक्षधर्मतारूपबलविशेषं

नन्वेवं वादिवाक्यमात्रस्य प्रतिरोधकत्वेनानुमानमात्रोच्छेदः। न च विरोधिवाक्यस्य न्यूनबलत्वे लक्षणायोगः, समानबलत्वे प्रतिरोधएव, अधिकबलत्वे नरशिरःशौचानुमानवत्तेन बाध ;एवेति वाच्यम्। अगृह्यमाणविशेषदशायां प्रतिवादिवाक्येन सर्वानुमानप्रतिरोधापत्तेः। अनुमानात्पूर्वं-पश्चाद्वाऽनुमानान्तरेण तस्य न्यूनाधिकबलत्वानिरूपणात्। निरूपणे वाऽनुमानवैयर्थ्यापत्तेः।

विरोधिपरामर्शः। तद्विपरीतव्याप्यवत्तानिर्णयः। विपरीतनिर्णयविरोधी। तद्विशिष्टज्ञानविरोधी। विशेषदर्शने। पीतत्वाभावव्याप्यवत्तानिश्चये, सति चाऽनुमितिप्रतिबन्धकबाधादौ। चक्षुरादेश्चेति चकारस्याऽनुमानशब्दसमुच्चायकता न संभवति, तस्यानुमानप्रतिरोध्यत्वादत आह। चस्त्वर्थ इति। नानुमानेन प्रतिरोध इति मूलस्य दोषविशेषाधीनज्ञाने जननीये इत्यादिः। तदुपस्थितावपीति। विरोधिपरामर्शसत्वेपीत्यर्थः। तस्य। दोषादिसमवहितचक्षुरादेः। अधिकबलत्वात्। अधिकबलत्वोपगमात्। अप्रतिबध्यफलकत्वोपगमादितियावत् तथा च दोषविशेषाद्यजन्यत्वं साक्षात्कारित्वव्यंजकदोषविशेषजन्यज्ञानसाधारणविपर्ययिताविशेषशून्यत्वं वा विरोधिपरामर्शप्रतिबध्यतावच्छेदककोटावधिकं फलबलेन विशेषणीयमिति भावः।

निवेश्य समाधास्यते। व्यवच्छेद इति। तदपेक्षासत्वे यत्र केवलं विरोधिवाक्यज्ञानं तत्रानुमितिः स्यादिति भावः। प्रतिरोधप्रयोजकेति। प्रतिबन्धकताप्रयोजकेत्यर्थः। समानबलत्वायोग इति। अनाप्तोक्ततयाऽनिश्चितविरोधिबोधकवाक्यज्ञानघटितसामग्रीत्वेन। प्रतिबन्धकत्वान्नानुमानोच्छेदस्तादृशनिश्चयस्थले इति भावः। एवमाभासत्वेनाऽनिश्चीयमानसाध्यसिद्ध्यौपयिकसमानकालीनसाध्यविरोध्युपस्थापनसमर्थप्रतिरुद्धकार्यकत्वं लक्षणार्थः। आभासत्वं अनाप्तोक्तत्वम्। वह्निव्याप्यधूमवत्तापरामर्शे. सति विरोधिबोधकवाक्येऽनाप्तोक्तत्वनिश्चयदशायां साध्यविरोध्युपस्थापनाऽसामर्थ्याद्यथा धूमे न सत्प्रतिपक्षितत्वं, तथैव समानबलत्वाभावान्न पाषाणमयत्वादेरपीति तत्वम्। आप्तोक्ततया निश्चितत्वे। प्रकृतवाक्यार्थगोचरयथार्थज्ञानवदुच्चरितत्वे। शौचानुमानस्येवेति। षष्ठ्यन्ताद्वतिः। विरोधिबोधकशब्देन। पक्षे साध्यं नास्तीति शब्देन। तथा च परस्पर-

नन्विति । एवं । विरोधिज्ञानभासकसामग्र्या निश्चयविरोधित्वे । यद्यपि विरोधिपरामर्शस्य तदभावव्याप्यवत्ताज्ञानविधयैव शिरोमणिमते प्रतिबन्धकत्वं, तन्मते मूलस्थसामग्रीपदेनापि साध्याभावव्याप्यवत्तापरामर्शस्य विवक्षणीयत्वात् । तथापि सामग्रीपदस्य यथाश्रुतार्थपरत्वाभिमानेनेयं शंका । वादिवाक्यमात्रस्य । साध्याभावबोधकवादिवाक्यमात्रस्य । मात्रपदेन साध्याभावबोधकानुमानाद्यपेक्षाऽव्यवच्छेदः । प्रतिरोधकत्वेन । प्रतिरोधकत्वप्रसंगेन । अनुमानमात्रोच्छेदः । परार्थानुमानमात्रोच्छेदः । विरोधिबोधकवाक्यादेवानुमित्यनुत्पादप्रसंगः । न्यूनबलत्वे । अनाप्तोक्ततयाऽनिश्चितत्वे । लक्षणायोगः । प्रतिरोधाप्रयोजकतया समानबलत्वायोगः । समानबलत्वे । अनाप्तोक्ततयाऽनिश्चितत्वे । प्रतिरोधः । इष्ट एवेति शेषः । अधिकबलत्वे । आप्तोक्ततया निश्चितत्वे । शौचानुमानवत् । शौचानुमानस्येव । तेन । विरोधिबोधकशब्देन । बाधः । विरोधिनिश्चयजननं । परार्थस्थले मध्यस्थस्य पक्षे साध्यमिव साध्यतदभावग्राहकमानयोराभासत्वं सन्दिग्धं, न तु कुत्रापि आभासत्वमनाभासत्वं वा निश्चितं । प्रमाणान्तरेण तन्निश्चये साध्यस्यापि प्रमाणान्तरेण निश्चयसंभवाद्विवादपर्यवसानापत्तेरिति समानबलतया प्रतिवादिशब्दः प्रतिरुन्ध्यादेवानुमानमित्याह । अगृह्यमाणेति । तद्विशिष्टबुद्धौतदभावव्याप्यवत्ताबुद्धेः ।

कार्यप्रतिरोधाभावान्न तदा सत्प्रतिपक्षः । अभासत्वं । अनाप्तोक्तत्वं । अनाभासत्वं । आप्तोक्तत्वम् । एतच्च न्यूनाधिकबलभावनिराकरणायोक्तम् । न चानुमाने आभासत्वं-भ्रमत्वं । अनाभासत्वं-प्रमात्वं-अनयोः सन्देहे प्रतिरोधानुपपत्तिरिति वाच्यम् । तत्र तदुभयाग्रहमात्रे तात्पर्यात् । विवादपर्यवसानापत्तेरिति । संशयोच्छेदापत्तेरित्याशयः । मध्यस्थस्यापि प्रतिवादित्वापत्तेरित्यस्मद्गुरुचरणाः । प्रतिरुन्ध्यादेवेति । एवकारश्चानिष्टप्रतिरोधस्थलेपि प्रतिरोधलाभार्थम् । इष्टापत्तिर्हि प्रतिरोधस्य क्वाचित्कत्वे एव युज्यते, स तु सार्वत्रिक इति सा न युक्तेति भावः । मूले अगृह्यमाणेति । अनिश्चीयमानेत्यर्थः । विशेषोऽनाभासत्वं आभासत्वं च । इष्टापत्तिपरिहाराय सर्वेति । विरोधिवाक्ये आभासत्वाऽनाभासत्वयोर्निश्चयदशाऽप्रसिद्धयैवेति भावः । ननु तत्राऽऽभासत्वादेः कुतो न निश्चय इत्यत आह । अनुमानादिति । अनुमानपदं साध्यतदभावग्राहकमानपरम् । पश्चादिति । तादृशानुमानकाले इत्यर्थः । तस्य । साध्यतदभावग्राहकमानस्य । न्यूनबलत्वं । अनाप्तोक्तत्वं । अधिकबलत्वं । आप्तोक्तत्वम् । अनिरूपणात् ।

मैवम्। विरोधिवाक्यमात्रस्य समबलत्वाभावात्। उक्तं हि व्याप्तिपक्षधर्मते बलमिति। प्रत्यक्षादेर्लिंगभावेनैवानुमान-प्रतिरोधः, कथायां तदुपन्यासानर्हत्वात्।

अथ व्याप्तिपक्षधर्मते यदि बलं कथं तर्हि प्रत्यक्षादेः प्रतिरोधकतया कथायामुपन्यास इत्यतआह। प्रत्यक्षादेरिति। अत्र हेतुमाह। कथायामिति। प्रत्यक्षस्य स्वरूपसत्तयैवबोधकत्वात्। विरोधिवाक्यमात्रस्यानुमित्यविरोधित्वात्। बोध्याभावव्याप्यवत्तानिर्णयेनैव शाब्दबोधप्रतिरोधाच्चेति।

दीधितौ-तर्हीति। तर्हि कथं प्रतिरोधकतया कथायां प्रत्यक्षादेरुपन्यास इत्यन्वयः। अनुमाने एव तादृशबलसत्वादिति भावः। दीधितौ-अत्रेति। व्याप्तिपक्षधर्मताभ्यां ज्ञायमानस्वरूपं लिंगभावमपुरस्कृत्य प्रत्यक्षशब्दयोः प्रतिरोधकतयाऽनुपन्यसनीयत्वे इत्यर्थः। मूले-तदुपन्यासानर्हत्वादिति। लिंगभावानापन्नप्रमाणस्यानुपयुक्तोपन्यासकत्वादिति भावः।

मध्यस्थस्येत्यादिः। निरूपणे चेति। प्रमाणान्तरेणेत्यनुषंजनीयम्। तथा च प्रमाणान्तरेण तन्निश्चयोपगमे इति समुदितार्थः। अनुमानवैयर्थ्यादिति। वादिप्रतिवाद्यन्यतरस्य साध्यवत्तानिश्चायकलिंगोपन्यासवैयर्थ्यादित्यर्थः। विरोधिवाक्यमात्रस्येति। मात्रपदं कारणान्तरराहित्यलाभार्थम्। व्याप्तिपक्षधर्मते बलमिति। तथा च पक्षतावच्छेदकावच्छिन्नविषयता-निरूपितसाध्याभावव्याप्यत्वावच्छिन्नविषयताशालिनिश्चयत्वेनैव विरोधिपरामर्शस्य-प्रतिबन्धकत्वम्, न तु साध्यविरोधिनिश्चयसामग्रीत्वेनेति भावः। ननु तदभावलिंगत्वेनाऽगृहीतस्यापि तदभावग्राहकप्रत्यक्षादिप्रमाणस्य स्वतस्तद्वत्तानुमानप्रतिरोधकत्वाल्लिंगभावेनैवेत्यत्र एवकारासंगतिरतः कथास्थलाभिप्रायेण मूलं योजयितुमाह। दीधितौअथेति। प्रत्यक्षादेरित्यादिना तदभावग्राहकवाक्योपग्रहः। मूले-प्रत्यक्षादेरिति। चक्षुरादेरित्यर्थः। लिंगभावेनैव। लिंगत्वेनैव। तथा च ह्रदो न वन्हिमान् वन्ह्यभावग्राहकप्रत्यक्षप्रमाणवत्वात्, तादृशवाक्यवत्वाद्वेत्याद्युपन्यासस्थले लिंगभावेनैव 'प्रत्यक्षादेरनुमानप्रतिरोधकत्वं अतो नाऽसंगतिरिति भावः। दीधितौ-अत्रेति। लिंगभावेन प्रतिरोधकत्वे इति स्पष्टार्थः। लिंगभावानापन्नप्रमाणस्य। चक्षुरादेः। लिंगभावापन्नतदुपन्यासस्थले तु तादृशपरामर्शस्य प्रतिबन्धकतेति न कश्चिद्दोषः। अनुपयुक्तोपन्यासकत्वादिति। मम साध्याभावप्रमापकं चक्षुः शब्दोवेत्युपन्यासस्यानुपयुक्तत्वात्। तदुपन्यासस्य। पक्षे साध्याभावप्रमापकं चक्षुरिति वाक्यस्य। साध्याभावप्रमापकः शब्दः इतिवाक्यस्य। तन्मात्रस्य। विरोधि-

यत्तु विरोधिव्याप्यद्वयस्याऽसाधारणत्वात्संशयजनकत्वं दूषकताबीजमिति। तन्न। एकैकं हि सत्प्रतिपक्षं, न तु विशिष्टं, तादृशं च न संशायकमिति। अनुमितिप्रामाण्यग्राहकाप्रवृत्तिर्दूषकताबीजमित्यन्ये। तन्न। परस्परप्रतिबन्धेनानुमितेरेवानुत्पत्तेः।

हेतुपूरणेन तदुपन्यासानुपयोगित्वं व्यवस्थापयति। दीधितौ-प्रत्यक्षस्येति। स्वरूपसत्तयैव। स्वज्ञानमनपेक्ष्यैव। बोधकत्वादिति। तथाचोपन्यासस्य परज्ञानमेव फलम्, प्रत्यक्षप्रमाणस्य च यदि ज्ञानमेवानुपयुक्तं तदा क्व उपन्यासोपयोग इति भावः। ननु प्रत्यक्षस्य ज्ञानानपेक्षस्य बोधकतया तदुन्यासस्य विरोधिज्ञानसामग्र्यसंपादकत्वेपि आदिपदग्राह्यशब्दस्य ज्ञातस्यैवबोधकतया तदुपन्यासस्य विरोधिसामग्रीसंपादकतया उपयोगित्वं दुर्वारमेवेत्यत आह। विरोधिवाक्यमात्रस्येति। विरोधिवाक्यज्ञानमात्रस्येत्यर्थः। मात्रपदेन कारणान्तरसाहित्यव्यवच्छेदः। अविरोधित्वादिति। तन्मात्रस्य विरोधिबोधकसामग्रीत्वविरहादिति भावः। तथापि कारणान्तरसहितज्ञानस्यैव प्रतिरोधोपयोगितया उद्भावनसार्थक्यमित्यतआह। बोध्येति। तथा च व्याप्यवत्तापरामर्शदशायां विरोधिवाक्यज्ञानादिसत्वेपि तदभावव्याप्यवत्तानिश्चयाभावघटितशाब्दसामग्र्याः कथंचिदप्यसंभवेन लिंगभावानापन्नशब्दप्रमाणोपन्यासो न विरोधिसामग्रीं संपादयतीति न कश्चिदुपयोग इति भावः।

वाक्यज्ञानमात्रस्य। तदुद्भावनसार्थक्यमिति। साध्याभावप्रमापकः शब्द इति वाक्योद्भावनसार्थक्यमित्यर्थः। तत्र साध्याभावप्रमापकशब्दविषयः पक्षः इत्याकारकतदुपन्यासेन परस्य शब्दत्वेन पक्षे साध्यं नास्तीति शब्दज्ञानेपि आनुपूर्वीविशेषप्रकारेण तदज्ञानान्न ततो विरोधिबोध इति दीधितिकृतां तादृशशब्दत्वेन ज्ञानस्य विरोधिबोधकत्वमालंब्योक्ततदूपणदानमसंगतमिति तेषां तदभिमानं स्वयं निराकरोति। इदमुपलक्षणमितीति। तादृशवाक्यप्रयोगादेवेति। पक्षे साध्यं नास्तीतिवाक्यप्रयोगादेवेत्यर्थः। एवकारव्यवच्छेद्यं स्पष्टयति। नन्विति। इत्याकारकतदुपन्यासादिति। - इत्याकारकोद्भावनस्यैव शब्दप्रमाणोपन्यासरूपत्वादितिभावः। तादृशोपन्यासस्य। साध्याभावप्रमापकशब्दविषयः पक्ष इत्याकारकोपन्यासस्य। प्रतिरोधकतेति। अनुमितिसामग्र्या बलवत्वादितिभावः मूले—असाधारणत्वादिति। साध्यव्याप्यत्वस्यसाध्याभाव-

रत्नकोपकारस्तु सत्प्रतिपक्षाभ्यां प्रत्येकं स्वसाध्यानुमितिः संशयरूपा जन्यते, विरुद्धोभयज्ञानसामग्र्याः संशयजनकत्वात्। संशयद्वारा अस्य दूषकत्वम्। न च संशयरूपा नानुमितिः बाधस्येव विरोध्युपस्थितेरनुमितिसामग्रीविघटकत्वेनाऽवधारणात् अन्यथा बाधेऽप्यनुमित्यापत्तेरिति वाच्यम्। अधिकबलतया बाधेन प्रतिबन्धात्, तुल्यबलत्वादनुमितिः स्यादेव सामग्रीसत्त्वात्। साध्याभावबोधस्य च तत्र प्रतिबन्धकत्वं न तु तद्बोधकस्य चक्षुरादेः। प्रत्येकं निर्णायकत्वेनाऽवधारितात्कथं संशय इति चेन्न। प्रत्येकाद्धिज्ञानमुत्पद्यमानं अर्थात्संशयो न तु प्रत्येकं संशयजनकत्वमिति मेने। तन्न।

इदमुपलक्षणम्। पक्षे साध्यं नास्तीति वाक्यस्यानुपूर्वीविशेषप्रकारेणैव ज्ञानं पक्षे साध्याभाववत्त्वावगाहिविरोधिसामग्रीघटकं तादृशं च ज्ञानं प्रत्यक्षात्मकं तादृशवाक्यप्रयोगादेव संपद्यते, न तु साध्याभावप्रमापकशब्दविषयः पक्ष इत्याकारकतदुपन्यासादिति न कथंचिदपि तादृशोपन्यासस्य प्रतिरोधकतेत्यपि बोध्यम्।

वद्व्यावृत्तत्वात्मकत्वात्, साध्याभावव्याप्यत्वस्य साध्यवद्व्यावृत्तत्वात्मकत्वादसाधारण्यं बोध्यम्। हेतुप्रतिहेतुसाधारणरूपं च अन्यतरत्वं द्वित्वादि। तादृशंचेति। प्रत्येकरूपावच्छिन्नमित्यर्थः। न संशायकमिति। असाधारणत्वाभावादिति भावः। तादृशे। प्रत्येकहेतुवृत्तितत्तल्लिंगतावच्छेदकावच्छिन्ने। मूले--अनुमितिप्रामाण्यग्राहकाऽप्रवृत्तिः। अनुमितौ प्रामाण्यग्रहानुत्पत्तिः। विरुद्धोभयज्ञानसामग्र्या। इति मूलं व्याचक्षाण एव न चेत्यादिकमवतारयति। विरोधिभानसामग्र्या इति। साध्यतदभावभासकसामग्र्या इत्यर्थः। संशयमात्रोच्छेदप्रसंग इति। सर्वत्रैव तत्सद्भावादितिभावः। मात्रपदं कात्स्न्यार्थकं। यत्किंचित्संशयोच्छेदे इष्टापत्तिवारणाय। विरोधिभानसामग्रीविधया इति। विरोधिभानसाग्रीत्वेनेत्यर्थः। बाधवदिति। बाधनिश्चयस्येवेत्यर्थः। मूले-बाधस्येवेति। बाधनिश्चयस्येवेत्यर्थः। विरोध्युपस्थितेरिति। साध्याभावव्याप्यवत्त्वोपस्थितेरित्यर्थः। विघटकत्वेनाऽवधारणादिति। विघटकत्वस्य दुर्वारत्वादित्यर्थः। अन्यथा। तदुपस्थितेरनुमितिसामग्र्यविघटकत्वे। बाधेपि। बाधनिश्चयसत्वेपीत्यर्थः। अनुमित्यापत्ते

साध्यतदभावयोर्विरोधेन यथैकज्ञानस्यापरधीप्रतिबन्धकत्वं तथा साध्याभावव्याप्यत्वस्यापि साध्यविरोधित्वात्तद्बुद्धेरपि साध्यधीप्रतिबन्धकत्वात्, विरोधिज्ञानत्वस्य प्रतिबन्धकत्वे तन्त्रत्वात् ।

मूले—एकैकमिति । प्रत्येकहेतुवृत्तितत्तल्लिंगतावच्छेदकावच्छिन्नं । सत्प्रतिपक्षं । सत्प्रतिपक्षविधया दुष्टव्यवहारविषयः । न तु विशिष्टं । हेतुप्रतिहेतुसाधारणरूपावच्छिन्नं । तादृशं च न संशायकं । संशायकताया दुष्टताबीजत्वे तादृशे दुष्टव्यवहारानुपपत्तिरित्यर्थः ।

विरोधिभानसामग्र्याः संशयविरोधित्वे संशयमात्रोच्छेदप्रसंग इति प्रकरणसमो विरोधिभानसामग्रीविधया संशयरूपामनुमितिं मा प्रतिरौत्सीत् परन्तु विरोधिविषयकत्वेन बाधवत्तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वं दुर्वारमिति शंकते । न च संशयरूपानानुमितिरित्यादिना । बाधबुद्धेर्विरोधिविषयकत्वमात्रं न प्रतिबन्धकत्वे तन्त्रं किन्तु निश्चितप्रामाण्यकत्वे सति विरोधिविषयकत्वं, सत्प्रतिपक्षस्थले च उभयव्याप्यवत्ताज्ञानयोरेव प्रामाण्यानिश्चयान्नानुमितिप्रतिरोध इति समाधत्ते । अधिकबलेनेति ।

ननु प्रत्यक्षे समानबलग्राह्याभावग्रहसामग्रीसंशयानुपपत्त्याऽविरोधिन्यास्तां अनुमितौ तस्याः प्रतिबन्धकत्वे का क्षतिरित्यत आह साध्याभावबोधस्येति । साध्याभावनिश्चयस्यैवेत्यर्थः । तत्र । अनुमितौ । नयनादेरित्यादिनाविरोधिपरामर्शपरिग्रहः । दृष्टान्तार्थं रिति । साध्यविवेचकनिश्चयत्वेनैव वा निश्चयस्यानुमितिविरोधित्वात्तादृशोपस्थितेरप्रतिबन्धकत्वे व्यभिचारेण तेनरूपेण प्रतिबन्धकत्वाऽसंभवादितिभावः । प्रतिबन्धकत्वं दुर्वारमिति । एकरूपेण प्रतिबन्धकत्वे लाघवादितिभावः । तन्त्रमिति । अन्यथा अप्रामाण्यज्ञानास्कन्दितस्यापि विरोधिपरामर्शस्य विरोधितापत्तेः । किन्त्विति । अथ बाधनिश्चयोत्पत्तिकालेऽनुमित्यापत्तिवारणाय विरोधिज्ञानसामग्र्याश्चाऽपि प्रतिबन्धकत्वं वाच्यं, एवं च सत्प्रतिपक्षनिश्चयस्य सामग्र्यन्तर्गततया तस्यापि तद्वत्ताबुद्धिं प्रति प्रतिबन्धकतया कथमनुमितिः । न च संशयानुपपत्तितादवस्थ्यम् । प्रतिबध्यतावच्छेदककोटौ प्रत्यक्षान्यत्वस्य प्रवेशादित्याशंकते । नन्विति । अविरोधिनीआस्तामिति । प्रत्यक्षान्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेश्यतामित्यर्थः । तस्याः । ग्राह्याभावप्रयोजकसामग्र्याः । मानाभावादिति । बाधनिश्चयस्य कार्यकालवृत्तितया प्रतिबन्धकतया बाधनिश्चयोत्पत्तिकाले नानुमित्यापत्तिरिति भावः ।

रत्नकोषकृतामयमाशयः। एकधर्मिकाऽविरुद्धानेकप्रकारकनानाधर्मिकैकविरुद्धाविरुद्धनानाप्रकारकज्ञानत्वादिवदेकधर्मिकविरुद्धानेकप्रकारकज्ञानत्वरूपसंशयत्वं न जन्यतावच्छेदकं।

मानाभावादिति पूरणीयम्। प्रत्येकमिति। एकैककोटिनिश्चयजनकत्वेनावधारितात्परामर्शादित्यर्थः। कथं संशय इति। संशयत्वावच्छिन्नं प्रति परामर्शस्य हेतुतायाः क्वाप्यक्लृप्तत्वादिति भावः। संशयत्वस्य जन्यतानवच्छेदकत्वेऽपि तत्तत्प्रकारकज्ञानत्वाच्छिन्नोत्पत्तिनियामकसामग्रीत एव सर्वत्र संशयः, प्रत्येककोटिभानसामग्र्याः संशयत्वावच्छिन्नजनकत्वं तु प्रत्यक्षस्थले नास्तीत्याह। प्रत्येकाद्धीति। तथा च तत्तत्प्रत्येकसाध्यकानुमितित्वस्य निश्चयसाधारणस्य तत्तत्साध्यव्याप्यवत्तापरामर्शजन्यतावच्छेदकत्वेऽपि तद्घटितसामग्रीसमाजात्संशयानुमितिर्निष्प्रत्यूहैवेति भावः। अगृहीताप्रामाण्यकत्वे सति विरोधिविषयकत्वमेव बाधप्रतिबन्धकत्वे प्रयोजकं, न तु निश्चितप्रामाण्यकत्वसहितमित्याशयेन दूषयति। तन्नेति।

रत्नकोषकारमतं परिष्कर्तुमारभते। दीधितौ-रत्नकोषकृतामित्यादिना। संशयत्वं यदि किंचिज्जन्यतावच्छेदकं तर्हि तद्घटितसामग्रीतएव संशयत्वाच्छिन्नोत्पत्तिरिति नियमेऽनुमितेःसंशयत्वं न संभवति, अनुमितिसामग्रीघटकस्य परामर्शादेः कस्यापि संशयत्वावच्छिन्नाजनकत्वादतः संशयत्वस्य जन्यतावच्छेदकत्वाभावं मूलकारोक्तं प्रतिबंदिसूचनेन च द्रढयति। एकधर्मिकेति। अविरुद्धानेकप्रकारकेत्यस्य द्वंद्वात्परश्रूयमाणेनज्ञानत्वेनसंबन्धः। प्रकारांशेतद्घटितेति। तत्तद्व्याप्यपरामर्शघटितेत्यर्थः। निष्प्रत्यूहैवेति। अन्यथा संशयत्वं यस्य कार्यतावच्छेदकं तस्मादेव संशयोत्पत्त्यभ्युपगमे प्रत्येककोट्युपस्थितितोपि संशयो न स्यादितिध्येयम्। विरोधिविषयकत्वमेवेति। एवकारव्यवच्छेद्यं स्पष्टयति। नत्विति। इदमुपलक्षणम्। साध्याभाववत्पक्षादेरपिव्यवच्छेदोबोध्यः, अन्यथाऽसमानाकारकबाधनिश्चयस्यवाऽसंग्रहापत्तेः। निश्चितप्रामाण्यकत्वसहितमिति। विरोधिविषयकत्वमिति पूर्वेणान्वयः। विरोधिज्ञानत्वस्येति। साध्यधीविरोधिविषयकनिश्चयत्वस्येत्यर्थः। तन्त्रत्वात्। प्रतिबन्धकतावच्छेदकत्वात्। तच्च साध्याभावव्याप्यवत्पक्षविषयकनिश्चयेऽप्यक्षतमिति भावः। किंचिदिति। कस्यचिदित्यर्थः। तद्घटितेति। किंचिद्घटितेत्यर्थः। प्रतिबंदिसूचनेन। दृष्टान्तसूचनेन। संशयलक्षणे धर्मिणि एकत्वं-धर्मे चानेकत्वं-विरुद्धत्वं च विशेषणं तादृशपरस्परव्यत्यासेन तत्प्रतिरूपकं मयं दृष्टान्तयतीति भावः। संबन्ध इति। अत्र एकधर्मिकाविरुद्धानेकप्रकारकस्य

तत्तद्धर्मिकतत्तत्प्रकारकज्ञानत्वप्रयोजकसमाजप्रयोज्यत्वात्समाजस्य। क्वचिद्विरोधभानस्यापि तत्प्रयोजकाधीनत्वात्।

संशयत्वघटकविरुद्धत्वविपरीतविशेषणघटितधर्मस्य जन्यतावच्छेदकत्वप्रसक्तिं प्रदर्श्य धर्म्यंशे तद्घटकैकत्वविपरीतविशेषणघटितस्य प्रकारांशे विशेषणानेकत्वविरुद्धैकत्वविरुद्धाविरुद्धनानात्वभेदेन भिन्नस्य तत्तद्धर्मद्वयस्य तथात्वापत्तिमपि सूचयति। नानाधर्मिकेति। एकत्वस्य प्रकारांशे विरुद्धत्वाविरुद्धत्वयोर्नानापदार्थे प्रत्येकमन्वयः। न जन्यतावच्छेदकं। कस्यापीति शेषः।

नानाधर्मिकैकविरुद्धाविरुद्धनानाप्रकारकस्य द्वन्द्वः, तमोज्ञानेन सह कर्मधारयः, ततोभावार्थकत्वप्रत्ययः। तथा च एकधर्मिकाऽविरुद्धानेकप्रकारकज्ञानत्वादिवदित्यर्थः। पर्वतोवन्हिमान् धूमवान् आलोकवांश्चेति ज्ञानत्वादिवदिति यावत्। विरुद्धत्वविपरीतेति। अविरुद्धत्वेत्यर्थः। विरुद्धत्वं-विरोधः-वैपरीत्यं विरोधाभावः तथा च परस्परविरोधाभावविशिष्टस्य वन्हिप्रकारकत्वविशिष्टधूमप्रकारत्वविशिष्टाऽऽलोकप्रकारकत्वघटितेत्यर्थः धर्मस्य। ज्ञानत्वस्य। जन्यतावच्छेदकत्वप्रसक्तिमिति। प्रसक्तिः-आपत्तिः-सा च विरुद्धानेकप्रकारकत्वघटितसंशयत्वं यदि जन्यतावच्छेदकं स्यात् तदा अविरुद्धानेकप्रकारकत्वघटितज्ञानत्वमपि जन्यतावच्छेदकं स्यादित्याकारिका। तद्घटकेति। संशयत्वघटकेत्यर्थः। तस्यैकत्वेऽन्वयः। उभयप्रकारतानिरूपितैकधर्मावच्छिन्नविशेष्यताकत्वमेव संशयत्वं-तथा च संशयत्वघटकैकत्ववदवृत्तिनानात्वघटितस्येत्यर्थः। अवृत्तित्वं च पर्याप्तिसंबन्धेन। तदेवाह। विपरीतविशेषणघटितस्येति। धर्म्यंशे ऽनेकत्वविशेषणघटितस्येत्यर्थः। तत्तद्धर्मद्वयस्येत्यनेनान्वयः। एकत्वविरुद्धाऽविरुद्धनानात्वभेदेनेति। एकत्वभेदेन, विरुद्धनानात्वभेदेन, अविरुद्धनानात्वभेदेनेत्यर्थः। तत्तद्धर्मद्वयस्य। पर्वतघटौ वन्हिमन्तौ-पर्वतघटौ वन्हितदभाववन्तौ-पर्वतघटौ वन्हिद्रव्यत्ववन्तौ इति ज्ञानत्वस्य। तथात्वापत्तिमपीति। जन्यतावच्छेदकत्वापत्तिमपीत्यर्थः। आपत्तिश्च एकधर्मिकविरुद्धानेकप्रकारकत्वघटितसंशयत्वं यदि जन्यतावच्छेदकं स्यात् तदा नानाधर्मिकैकप्रकारकत्वघटितज्ञानत्वं. नानाधर्मिकविरुद्धनानाधर्मप्रकारकत्वघटितज्ञानत्वं, नानाधर्मिकाऽविरुद्धनानाधर्मप्रकारकत्वघटितज्ञानत्वमपि जन्यतावच्छेदकं स्यादित्याकारिका।

एकत्वस्यप्रकारांशे अन्वयोवोध्यः। कस्यापीति। तथा चोक्तकार्यकारणभावविरहादनुमिते ; संशयत्वं नानुपपन्नमिति भावः। तथा च। समाजस्य समाजप्रयोज्यत्वे। एकमात्रकोटिभानप्रयोजकेति। वन्हिमात्रभानप्रयोजकेत्यर्थः। सामग्रीदशायां। वन्हिव्याप्यधूमवान्पर्वत इति परामर्शकाले। यद्ज्ञानं

नन्वेवं क्वचिद्ज्ञाने संशयत्वं क्वचिन्नेत्यत्र किं नियामकमित्यत आह। तत्तद्धर्मिकेति। पर्वतादिधर्मिकेत्यर्थः। तत्तत्प्रकारकेति। वन्हिवन्ह्यभावादिप्रकारकेत्यर्थः। प्रयोजकसमाजेति। तदवच्छिन्नोत्पत्तिनियामकसामग्रीसंवलनेत्यर्थः। समाजस्य। पर्वतादिधर्मिकवन्ह्यादिप्रकारकत्वतद्धर्मिकवन्ह्यभावादिप्रकारकत्वयोर्वैशिष्ट्यस्य। तथा च एकमात्रकोटिभानप्रयोजकसामग्रीदशायां यद्ज्ञानं जायते तत्र तत्कोटिप्रकारकत्वे विरुद्धकोट्यन्तरप्रकारकत्ववैशिष्ट्यप्रयोजकस्य तत्कोटिप्रकारकत्वप्रयोजकसामग्र्यां कोट्यन्तरप्रकारकत्वप्रयोजकसामग्रीवैशिष्ट्यस्य विरहाद्विरुद्धकोट्यन्तरप्रकारकत्वविशिष्टतत्कोटिप्रकारकज्ञानत्वरूपसंशयत्वविरहः, कोटिद्वयभानसामग्र्युत्तरं च जायते तत्र तादृशप्रयोजकवैशिष्ट्यसत्वेनैतादृशसंशयत्वमिति संशयत्वस्य जन्यतानवच्छेदकत्वेपि तन्नियमनिर्वाह इतिभावः।

जायते। वन्हिमानिति ज्ञानं जायते। तत्र। ज्ञाने। अस्य संशयत्वविरह इत्यग्रिमेणान्वयः। तत्कोटिप्रकारकत्वे। वन्हिप्रकारकत्वे। विरुद्धकोट्यन्तरप्रकारकत्ववैशिष्ट्यप्रयोजकस्य। वन्ह्यभावप्रकारकत्ववैशिष्ट्यप्रयोजकस्य। तत्कोटिप्रकारकत्वप्रयोजकसामग्र्यां। वन्हिव्याप्यधूमवान्पर्वत इति परामर्शे। कोट्यन्तरप्रकारकत्वप्रयोजकसामग्रीवैशिष्ट्यस्य। वन्ह्यभावप्रकारकत्वप्रयोकिका या वन्ह्यभावव्याप्यवान् पर्वत इति परामर्शात्मक सामग्री तदवैशिष्ट्यस्य। विरुद्धकोट्यन्तरप्रकारकत्वविशिष्टेति। वन्ह्यभावप्रकारकत्वविशिष्टेत्यर्थः। तत्कोटिप्रकारकज्ञानत्वेति। वन्हिप्रकारकज्ञानत्वेत्यर्थः। कोटिद्वयभानसामग्र्युत्तरंचेति। वन्ह्यभावव्याप्यवानितिपरामर्शविशिष्टवन्हिव्याप्यधूमवान्पर्वत इति परामर्शोत्तरं चेत्यर्थः। जायते। इति। पर्वतोवन्हिमान्नवेतिज्ञानं जायते इत्यर्थः। तत्र। ज्ञाने। अस्य तादृशसंशयत्वमित्यनेनान्वयः। प्रयोजकमाह। तादृशप्रयोजकवैशिष्ट्यसत्वेनेति। वन्हिव्याप्यधूमवान्पर्वत इति परामर्शे वन्ह्यभावव्याप्यवन्पर्वत इति परामर्शवैशिष्ट्यसत्वेनेत्यर्थः। तन्नियमनिर्वाह इति। समाजस्य तत्तद्धर्मिकतत्तत्प्रकारकज्ञानत्वप्रयोजकसमाजप्रयोज्यत्वनिर्वाह इत्यर्थः। एककोट्यंशे। वन्ह्यभावांशे। अपरकोटिविरोधावगाहित्वसहितं। वन्हिविरोधावगाहित्वसहितं। तथा च एककोट्यंशेऽपरकोटिविरोधावगाहित्वसहितकोटिद्वयावगाहिज्ञानत्वं संशयत्वम्। तादृशस्य। एककोट्यंशेऽपरकोटिविरोधावगाहित्वसहितज्ञानत्वरूपसंशयत्वस्य। कोटिद्वयभानप्रयोजकसंवलनमात्रं। परामर्शद्वयसंवलनमात्रं। मात्रपदेन विरोधिभासकसामग्र्या व्यवच्छेदः। तत्सत्वेपि। कोटिद्वयभानसामग्रीसत्वेपि। उपगन्तव्यमिति। तथा

नीलेतरघटत्व-घटत्वाप्रकारकज्ञानत्व-एकधर्मिकाऽविरुद्धानेकप्रकारकान्यज्ञानत्वादिवच्च संशयान्यज्ञानत्वादिरूपनिश्चयत्वमपि न जन्यतावच्छेदकं, तत्तत्प्रयोजकविरहादेव तद्विरहाद्युपपत्तेः।

उक्तयुक्तिभिः संशयत्वस्य कार्यतावच्छेदकत्वखंडनं वस्तुगतिमनुरुध्य। वस्तुतः संशयत्वस्य कार्यतावच्छेदकत्वेपि तस्य धर्मितावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकताया एव स्वीकरणीयतया प्रत्यक्षस्थले यथा तत्तदभावप्रकारकज्ञानसामग्रीद्वयसहितधर्मिज्ञानरूपा सामग्री संशयं जनयति तथाऽनुमितिस्थलेऽपि तादृशधर्मिज्ञानात्मकसामग्र्या संशयजनने न किंचिद्बाधकम्। ननु माभूत्संशयत्वं जन्यतावच्छेदकं तथापि निश्चयत्वावच्छिन्नहेतुभूतात्परामर्शादितः कथं संशयानुमितिरित्याशंकया निश्चयत्वस्यापि जन्यतावच्छेदकत्वं निराकरोति। नीलेतरेति। यत्र घटे नीलरूपवद्भेदात्मकनीलेतरत्वप्रयोजको घटे नीलोत्पादकसामग्रीविरहः, घटत्वप्रयोजकं च घटत्वावच्छिन्नहेतुदण्डादिघटितसामग्रीजन्यत्वं, तत्संवलनाधीनं नीलेतरत्वघटत्वयोः संवलनमिति तदेव नीलेतरत्वविशिष्टघटत्वनियामकमिति तस्य किञ्चिज्जन्यतानवच्छेदकत्वेपि कस्यचिदेव घटत्वस्य तथात्वमिति नियमः, एवं पटादिज्ञाने

चाऽव्याप्यवृत्तित्वज्ञानाभावरूपं यद्विरोधिभासकं तत्प्रयोज्यमेव संशयत्वमिति भावः। अतः। अव्याप्यवृत्तिताज्ञानाभावस्य विरोधिभासकस्य सत्वात्। तस्यैव। विरोधभासकसामग्र्याः। तत्संवलनस्यापि। अव्याप्यवृत्तित्वज्ञानाभावादिघटितविरोधिभानप्रयोजकसामग्रीसंवलनस्यापीत्यर्थः। तद्विरहादेवेति। तादृशसामग्रीविरहादेवेत्यर्थः। तथा च वन्हिविरुद्धवन्ह्यभाववान्वन्ह्यभावविरुद्धवन्हिमानित्याकारकः संशयो बोध्य। उक्तयुक्तिभिः। संशयत्वं न जन्यतावच्छेदकमित्येतावद्ग्रन्थेन। तस्य। संशयत्वस्य। तादृशधर्मिज्ञानात्मकेति। धर्मितावच्छेदकविशिष्टधर्मिज्ञानात्मकेत्यर्थः। तत्तदभावप्रकारकज्ञानसामग्रीद्वयसहितेत्यपि बोध्यम्। तथापि। संशयत्वस्य जन्यतानवच्छेदकत्वेपि। निश्चयत्वावच्छिन्नहेतुभूतात्। तदभावाप्रकारकत्वे सति तत्प्रकारकानुमितित्वावच्छिन्नहेतुभूतात्। तेन निश्चयत्वस्यातिप्रसक्ततया जन्यतानवच्छेदकत्वेपि न क्षतिः। तन्निश्चयत्वं-तदभावप्रकारकेतरत्वे सति तत्प्रकारकत्वम्, तस्य जन्यतानवच्छेदकत्वे भेदघटितं नीलेतरत्वं दृष्टान्तः। तत्संवलनाधीनं। नीलोत्पादकसामग्रीविरह-दण्डादिघटितसामग्रीसंमेलनाधीनं। तदेव। उक्तसंमेलनमेव। तस्य। नीलेतरघटत्वस्य। तथात्वमिति। नीलेतरत्व-

घटत्वप्रकारताविरहः तत्पूर्वकालीनघटत्वप्रकारकत्वावच्छिन्नजनक-घटत्वज्ञानादिघटितसामग्रीरूपतथात्वप्रयोजकविरहप्रयोज्य इति ज्ञानत्वप्रयोजिका तत्पूर्वकालीनसामान्यसामग्रीघटत्वप्रकारकत्वावच्छिन्नोत्पादकसामग्रीविरहश्च द्वयोः संवलनमेव घटत्वाप्रकारकत्व-ज्ञानत्वयोः संवलनप्रयोजकं तदेव जन्यतानवच्छेदकस्यापि एकविशिष्टापरस्य प्रयोजकम्, एवमेकधर्मिकविरुद्धानेकप्रकारकत्वं संवलितनानासामग्रीप्रयोज्यं तद्विरहप्रयोज्यः तद्विरहः तत्संवलित-ज्ञानत्वप्रयोजकप्रयोज्यं तद्विशिष्टज्ञानत्वमिति यथा तस्य जन्यतानवच्छेदकत्वेऽपि नानियमस्तथा निरुक्तनिश्चयत्वस्यापीत्यर्थः। यद्यपि-तत्प्रयोजकसमाजनियम्यस्य जन्यतानवच्छेदकतायामेकधर्मिका-

विशिष्टघटत्ववत्वमित्यर्थः। एवं तदभावनिश्चयत्वं तदप्रकारकत्वे सति तदभावप्रकारकत्वम्, तस्य जन्यतानवच्छेदकत्वे दृष्टान्तमाह। **एवमिति।** **पटादिज्ञाने।** पटः इत्याकारकज्ञाने। **घटत्वप्रकारकत्वविरहः।** घटत्वाप्रकारकत्वमिति यावत्। अस्य च तथात्वप्रयोजकविरहप्रयोज्य इत्यनेनाऽन्वयः। घटत्वप्रकारकत्वप्रयोजकविरहप्रयोज्य इति तदर्थः। घटत्वप्रकारकत्व-प्रयोजकसामग्रीमाह। **तत्पूर्वकालीनेत्यादिना।** पटज्ञानपूर्वकालीनेत्यर्थः। **तथात्वप्रयोजकेति।** घटत्वप्रकारकत्वप्रयोजकेत्यर्थः। **संवलनप्रयोजकं।** वैशिष्ट्यप्रयोजकं। **तदेव।** तादृशसामग्रीविरहविशिष्टतादृशसमवधानमेव। **एकविशिष्टापरस्य।** घटत्वाप्रकारकत्वविशिष्टज्ञानत्वस्य। **प्रयोजकं।** वैशिष्ट्यप्रयोजकस्य विशिष्टप्रयोजकत्वानुभवात्। एकधर्मिकविरुद्धोभयप्रकार-ज्ञानात्मकसंशयत्वघटितस्य "संशयान्यज्ञानत्वरूप" निश्चयत्वस्य जन्यतानवच्छेदकत्वे तत्सदृशं दृष्टान्तमाह। **दीधितौ-एकधर्मिकेति।** **तद्विरहप्रयोज्यस्तद्विरह इति।** संवलितनानासामग्रीविरहप्रयोज्यः एकधर्मिकाऽविरुद्धानेकप्रकारकत्व-विरह इत्यर्थः। **तत्संवलितज्ञानत्वप्रयोजकप्रयोज्यं।** नानासामग्रीविरह-संवलितज्ञानत्वप्रयोजकसामग्रीप्रयोज्यं। **तद्विशिष्टज्ञानत्वं।** एकधर्मिकाऽ-विरुद्धानेकप्रकारकत्वाभावविशिष्टज्ञानत्वं। **तस्य।** तद्विशिष्टज्ञानत्वस्य। **निरुक्तेति।** संशयान्यज्ञानत्वरूपेत्यर्थः। दृष्टान्तान्तरानुसरणं किमर्थमित्या-शंकते। **यद्यपीति।** **पूर्वं।** एकधर्मिकाऽविरुद्धानेकप्रकारकेत्यादिग्रन्थेनेति शेषः। एवकारेण एकधर्मिकाऽविरुद्धानेकप्रकारकान्यज्ञानत्वव्यवच्छेदः। समाधत्ते। **तथापीति।** **तत्र।** एकधर्मिकाऽविरुद्ध-नानाप्रकारकज्ञानत्वे। **तादृशमेव।** सामग्रीविरहसंवलितसामग्रीनियम्यत्व-मेव। **तत्र।** तेषु मध्ये। **प्रथमे।** नीलेतरघटत्वे। **तज्जनकेति।** नीलजनकेत्यर्थः। **तद्वदन्यत्वविशिष्टप्रयोजकतेति।**

विरुद्धंनानाप्रकारंकज्ञानत्वादिकमेव पूर्वं दृष्टान्तीकृतम्, तथापि तत्र सामग्रीरूपप्रयोजकसमाजनियम्यत्वमेव न तु सामग्रीसमाजनियम्यत्वं निश्चयत्वे च तादृशमेवेति प्रकृतसाम्याय दृष्टान्तान्तरानुसरणम्। तत्र प्रथमे तज्जनकसामग्र्यभावसंवलनस्य तद्वदन्यत्वविशिष्ट-प्रयोजकता, द्वितीये तदवच्छिन्नजनकसामग्रीविरहसंवलनस्य, तृतीये तद्घटकनानाधर्मावच्छिन्नहेतुभूतसामग्रीसंवलनविरहसंवलनस्येति उत्तरोत्तरम् निश्चयत्वसाम्यौत्कट्यमिति बोध्यम्।

नीलवद्भेदविशिष्टप्रयोजकतेत्यर्थः। द्वितीये। घटत्वप्रकारकज्ञानत्वे। तदवच्छिन्नेति। घटत्वप्रकारकज्ञानत्वावच्छिन्नेत्यर्थः। घटत्वाऽप्रकारक-ज्ञानत्वविशिष्टे प्रयोजकतेति शेषः। तृतीये। एकधर्मिकाऽविरुद्धानेकप्रकार-कान्यज्ञानत्वे। तद्घटकेति। तादृशज्ञानत्वघटकेत्यर्थः। संवलनस्य। प्रयोजकतेति पूर्वेणान्वयः। बोध्यमिति। तदभावाप्रकारकेतरत्वेन. तदभावप्रकारकत्वेन।

एकधर्मिकविरुद्धोभयप्रकारकान्यत्वेन च घटितनिश्चयत्वस्य जन्यतानवच्छेद-कत्वे क्रमेण दृष्टान्तत्रयं बोध्यमिति ध्येयम् दीधितौ—ज्ञानत्वादिवदित्यत्र आदिपदेन नानाधर्मिकैकप्रकारकान्यज्ञानत्वपरिग्रहः। दीधितौ-तत्त्वेति। तदभावप्रकार-त्वादि। तथा च तत्त्वप्रयोजकविरहादेवेत्यस्य तदभावप्रकारकत्वप्रयोजक-विरहादेवेत्यर्थः। तद्विरहाद्युपपत्तेरिति। तदभावप्रकारकत्वविरहोपपत्ते-रित्यर्थः। आदिना तद्वदन्यत्वस्य परिग्रहः। परस्परेति। परस्परस्वस्व-परामर्शजन्येत्यर्थः। तथा च। विरुद्धोभयसामग्रीजन्यज्ञानस्य संशयरूपत्वे च। विरोधिभानप्रतिबन्धकाभावसहकारेणेति। विरोधभाने प्रतिबन्धकी-भूताऽव्याप्यवृत्तित्वज्ञानाभावसहकारेणेत्यर्थः। विरोधभानप्रतिबन्धकेत्युक्तिस्तु सांसर्गिकविषयतायाः प्रतिबध्यतावच्छेदकत्वस्वीकारेण। तथा च। विरोध-भासकसामग्र्यसत्वे च। एककोट्यंशे। वन्ह्यभावांशे। अपरस्य। वन्हेः। प्रकारतयेति। तथा च पर्वतोवन्हिमान् विरोधसंबन्धेन वन्हि-विशिष्टवन्ह्यभाववान्वेति संशयोबोध्यः, एवं पर्वतोवन्ह्यभाववान् विरोधसंबन्धेन वन्ह्यभावविशिष्टवन्हिमान्वेत्यपि बोध्यम्। ननु संशयानां विरोधसंबन्धेनैक-कोट्यंशेऽपरकोटेर्भानोपगमे विरोधसंबन्धेन वन्हिविशिष्टवन्ह्यभाववान्. वन्हिमान्वा इत्याकारकतायाः, वन्ह्यभावविशिष्टवन्हिमान् वन्ह्यभाववानित्याकारकतायाः वा प्रसंग इत्यत आह। एककोटिसंबन्धनिष्ठसंसर्गतायामिति। वन्ह्यभाव-संसर्गनिष्ठसंसर्गतायामित्यर्थः। कोट्यन्तरनिरोधस्य। वन्हिविरोधस्य। भानोपगमादिति। तथा च पर्वतोवन्हिमान्वेति संशये वन्हेः प्रतियोगितानु-

एवञ्च तुल्यवलाभ्यां विरुद्धोभयसामग्रीभ्यां जायमानं ज्ञानमर्थात् संशयरूपं भवति। अत एवाहत्यैव विप्रतिपत्तिजन्मानं संशयमामनन्ति। फलवलकल्पनीयश्च

एवं चेति। संशयत्वनिश्चयत्वयोर्जन्यतानवच्छेदकत्वे चेत्यर्थः। तुल्यवलाभ्यां परस्परकार्यविरोधनीभ्याम्। संशयरूपं भवतीति। तथा च सद्बलसत्प्रतिपक्षसंवलनस्थले तुल्यवलकोटिद्वयानुमितिसामग्रीभ्यां संशयानुमितिर्जन्यत एवेति भावः।

अथ क्लृप्तविरोधभासकविरोधावगाहिपरामर्शघटितसामग्र्यभावाद्विरोधो न भासितुमर्हति तथा च कथं संशय इति चेन्न। सत्प्रतिपक्षतादशायां कोटिद्वयनिश्चयानुत्पादस्योभयवादिसिद्धतया तन्निर्वाहाय परस्परजन्यकार्ये विरोध्यनुमितिसामग्र्योः प्रतिवन्धताकल्पनापेक्षया विरोधभानप्रतिवन्धकाभावसहकारेण विरोधाविषयकस्यापि परामर्शस्य विरोधभानप्रयोजकताया लाघवेन कल्पनादनुपस्थितस्य विरोधस्य प्रकारतया भानासम्भवेऽपि विरोधसम्बन्धेन एककोट्यंऽशे परकोटेः प्रकारतया एककोटिसम्वन्धनिष्ठसंसर्गतायां कोट्यन्तरविरोधस्यावच्छेदकतया भानोपगमात्, अन्यथा यत्र कोट्योः नाविरोधग्रहः न वा विरोधस्योपस्थितिर्वर्तते तत्र सामग्रीसमाजात् प्रत्यक्षात्मककोटिद्वयनिश्चयस्य दुर्वारत्वापातात्।

योगितासंसर्गस्याऽभावांशे भाने तादृशानुयोगितानिष्ठसांसर्गिकविषयतायां विरोधस्यावच्छेदकत्वं स्वीक्रियते. न तु स्वातंत्र्येण तस्य संसर्गता। विरोधिसंयोगत्वेन विरोधिस्वरूपत्वेन वा संसर्गतेत्यपि केचित्। एतन्मते संयोगादिनिष्ठविरोधावच्छिन्नसंसर्गताकपर्वतोवन्हिमान्नवेति संशयो वोध्यः। अन्यथा। विरोधाभाने। यत्र। स्थलविशेषे। कोट्योः। वन्हितदभावयोः। नाविरोधग्रहः। नाऽव्याप्यवृत्तित्वज्ञानं। तत्र। स्थलविशेषे। दुर्वारत्वादिति। संशयसमुच्चयभिन्नत्वेन नेष्टापत्तिः संभवतीति भावः। सत्प्रतिपक्षे संशयस्य दूषकता न संभवतीत्याशंकते। अथेति। नाविरोधग्रह इति समुच्चयात्मककोटिद्वयनिश्चये इष्टापत्तिनिराकरणाय। नाऽविरोधग्रहः नाऽव्याप्यवृत्तित्वज्ञानं। एककोटिविशिष्टापरकोटेरिति। अस्य वाधग्रह इत्यनेनान्वयः। विरोधसंवन्धेन वन्हिविशिष्टो यो वन्ह्यभावस्तदभाववानिति वाधग्रह इत्यर्थः। विरोधविशिष्टसंयोगादिसंवन्धेन चेति। आदिपदेन विरोधविशिष्टस्वरूपसंवन्धोग्राह्यः। कोट्यो र्वा वाधग्रहः। तथा च तादृशसंयोगसंबन्धेन न वन्हिमान्, तादृशस्वरूपसंवन्धेन न वन्ह्यभाववानिति ग्रहः। विरोधभानाऽसंभवेनेति। सामग्रीसमाजादिति शेषः। एकदेति।

अथ यत्र कोट्योर्नाविरोधग्रहः अथ च धर्मिणि विरोधसम्बन्धेनैककोटिविशिष्टापरकोटेः विरोधविशिष्टसंयोगसम्बन्धेन च कोट्योर्वा बाधग्रहः तत्र कथञ्चिदपि विरोधभानासम्भवेन एकदा प्रतियोगितदभावयोः निश्चयरूपानुमितिर्जायतामिति चेत्, प्रत्यक्षस्थलेप्येष अनुयोगस्तुल्यः।

अथ धर्मिणि संशयान्यतद्वत्ताज्ञानं प्रति अव्याप्यवृत्तित्वज्ञानाभावविशिष्टतद्विरोधिधर्मवत्ताज्ञानसामग्री प्रतिबन्धिकेति नोपदर्शितस्थले परस्परविरोधेन तत्तदभावयोः प्रत्यक्षनिश्चयोपि प्रत्यक्षानुमित्यादिसामग्रीणां चानुगतरूपेण प्रतिबन्धकताकल्पनासम्भवात्, अनुमितिस्थले विरोध्यनुमितिसामग्र्याः प्रतिबन्धकत्वे कल्पनीये संशयान्यत्वं न प्रतिबध्यतावच्छेदकगर्भे निवेश्यत इति क संशयानुमितिवार्तेति।

एकधर्मिणीति शेषः। अनुयोगः। आक्षेपः अव्याप्यवृत्तित्वज्ञानविरहे बाधग्रहे सामग्रीसमाजात्प्रत्यक्षं निश्चयात्मकं जायतामिति पूर्वपक्षः तुल्यइति। समानइत्यर्थः। पुनःशंकते। अथेति। तद्वत्ताज्ञानं प्रतीति। वन्हिमत्ताज्ञानंप्रतीत्यर्थः। तद्विरोधि। वन्हिविरोधि। धर्मवत्ताज्ञानसामग्रीति। वन्ह्यभाववत्ताज्ञानसामग्रीत्यर्थः। प्रतिबन्धिकेति। तथा च संशयान्यतद्वत्ताबुद्धिं प्रति अव्याप्यवृत्तित्वज्ञानाभावविशिष्टतद्विरोधिप्रत्यक्षजनकसामग्रीत्वेन प्रतिबन्धकत्वमिति भावः। दर्शितस्थले। अव्याप्यवृत्तित्वज्ञानविरहे कोट्योर्बाधग्रहे प्रत्यक्षसामग्रीसमाजस्थले। न तत्तदभावयोः। न वन्हितदभावयोः। ननु तुल्ययुक्त्या न निश्चयानुमितिरित्यत आह। प्रत्यक्षानुमितिसामग्रीणां चेति। असंभवादिति। प्रत्यक्षानुमितिसाधारणानुगतसामग्रीत्वाऽसंभवादिति भावः। प्रतिबन्धकत्वे कल्पनीय इति। लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धिं प्रति अव्याप्यवृत्तित्वज्ञानाभावविशिष्टतद्विरोध्यनुमितिसामग्रीत्वेन प्रतिबन्धकत्वे कल्पनीये इत्यर्थः। भाने एवेति। पर्वतोविरोधसंबन्धेन वन्हिविशिष्टवन्ह्यभाववानिति ज्ञाने एवेत्यर्थः। एवकारेण पर्वतो वन्हिमान्नवा पर्वतोवन्हिमान्वन्ह्यभावप्रतियोगिकविरोधविशिष्टस्वरूपेण वन्ह्यभाववान् वेत्यादीनां व्यावृत्तिः। धर्मिणि। पक्षे। तादृशकोटेर्बाधग्रहस्य। विरोधसंबन्धेन वन्हिविशिष्टो यो वन्ह्यभावःतदभाववानितिबाधग्रहस्य।

लौकिकसन्निकर्षजन्ये। घटादौ। अनुमिनोमीतिप्रतीतेश्च विषयताविशेषः- सांध्ये। आपादयामीतिप्रतीतेश्चविषयताविशेषः आपाद्ये। एवं सन्देह्मीतिप्रतीते-

अत्रार्वाचीनाः। संशयत्वं न विरोधावगाहितानियतं, तथाहि यथा लौकिकसन्निकर्षजन्ये साक्षात्करोमीति प्रतीतिविषयताविशेषः अनुमिनोमि आपादयामीति प्रतीतेश्चानुमित्यापत्त्योस्साध्यापाद्ययोर्विषयताविशेषो दुरपह्नवः तथा सन्देह्मीत्यनुव्यवसायबलात् संशयेपि कोट्यंशे विलक्षणविषयता निष्प्रत्यूहैवेति तत्प्रतियोगिकत्वमेव संशयत्वं तस्या विरोध्यनवगाहिज्ञानसाधारण्ये न किञ्चिद्बाधकम्। न च तादृशप्रतीतेर्विरोधावगाहिसमानधर्मिकतत्तदभावावगाहिज्ञानत्वावलम्बनतयैवोपपत्तेर्विषयताविशेषे किं मानमिति वाच्यम्। क्वचित्संशये विरोधस्य सांसर्गिकविषयताया प्रमाणान्तररहिताया उक्तातिप्रसङ्गवारणाय सामग्रीप्रतिबन्धकतायाश्च कल्पनामपेक्ष्य लाघवेन कोटितारव्यविलक्षणविषयताया एव कल्पयितुं शक्यत्वात्, सा च प्रकारताप्रभेदः तदन्यैव वा कोटिविशेष्यकसंशयसाधारण्यानुरोधात्। न च तादृशविषयतानिष्ठवैलक्षण्यं दुर्घटमखण्डोपाधेरपसिद्धांतकवलितत्वादिति वाच्यम्। एवं सति विषयतात्वप्रकारतात्वादीनामपि

विषयताविशेषःकोट्यंशे। सैव विषयताकोटिताऽऽख्या। तत्प्रतियोगिकत्वमेवेति। विलक्षणविषयतानिरूपकत्वमेवेत्यर्थः। एवकारेण विरोधावगाहित्वस्य व्यावृत्तिः। तस्याः। विलक्षणविषयतायाः। विरोध्यनवगाहिज्ञानसाधारण्ये। पर्वतोवन्हिमान्नवेतिसंशये। न किंचिद्बाधकमिति। एवं च अव्याप्यवृत्तित्वज्ञानविरहे कोट्योर्बाधग्रहे प्रत्यक्षसामग्रीसमाजसत्वे एतादृशविषयताशालिसंशयोत्पत्त्या न प्रागुक्तप्रतिबध्यप्रतिबन्धकभावावश्यकतेति भावः। संशये विरोधावगाहित्वमावश्यकमिति शंकते। न चेति तादृशप्रतीतेः। सन्देह्मीत्यनुव्यवसायस्य ज्ञानत्वावलंबनतयैवेति। तादृशज्ञानत्वाश्रयतयैवेत्यर्थः। विषयताविशेषे। कोटितारव्यविषयताविशेषे। क्वचित्संशये। सत्प्रतिपक्षकालीनानुमितौ। प्रात्यक्षिकसंशये तु विरोधस्य प्रकारतयापि भानसंभवात्क्वचिदित्युक्तम्। विरोधस्येति। षष्ठ्यर्थोनिष्ठत्वम्, सांसर्गिकविषयतान्वयि। उक्तातिप्रसंगवारणायेति। अव्याप्यवृत्तित्वज्ञानाभावकाले विरोधज्ञानप्रतिबन्धकाभावसत्वे प्रत्यक्षात्मककोटिद्वयनिश्चयापत्तिवारणायेत्यर्थः। अव्याप्यवृत्तित्वज्ञानदशायामेव समुच्चयोपगमादिति भावः। युक्तत्वादिति। वक्ष्यमाणप्रतिबध्यप्रतिबन्धकभावकल्पनं तु एतन्मते फलमुखत्वान्नदोषायेति बोध्यम्। सा च। कोटिताख्यविषयता च। कोटिविशेष्यकसंशयेति। पर्वतेवन्हिर्नवेतिसंशयेत्यर्थः। विशेष्यवृत्तिरपीतिभावः। तादृशविषयतानिष्ठं। कोटिताख्यविषयतानिष्ठं। एवं सति। अखण्डोपाधेरपसिद्धान्तत्वे। लाघवमात्रेण विषयताऽनंगीकारादाह। अस्तुवेति। ज्ञाननिरूपितत्वमेवेति।

विलयप्रसङ्गेन बहुतरासामञ्जस्यात्। अस्तु वा विरोधिकोट्यन्तरविषयकत्वेन ज्ञाननिरूपितत्वमेव समुच्चयविषयव्यावृत्तस्तद्विशेषः संशय एव तत्कोटिविषयकत्वयोर्मिथो अवच्छेद्यावच्छेदकभावोपगमात्। तादृशविषयताशालिबुद्धौ च मणिमन्त्रादिन्यायेन कोट्योरव्याप्यवृत्तित्वज्ञानं प्रतिबन्धकमास्थीयते, नातः समुच्चयदशायां संशयापत्तिः, एवं कोट्यंशे औत्कट्यरूपसम्भावनात्वमपि विषयताविशेष एवेति ध्येयम्।

न चैवमर्थसमाजरूपबाधकेन संशयत्वस्य कार्यतानवच्छेदकत्वव्यवस्थापनं दीधितिकृतो विरुद्धयेत सामग्रीद्वयसमाजस्य तत्तत्सामग्रीप्रयोज्यकार्यतावच्छेदकद्वयसामानाधिकरण्यमात्रप्रयोजकत्वात्, कार्यतावच्छेदकविषयितयोरवच्छेद्यावच्छेदकभावादिप्रयोजकत्वासम्भवेन तत्समाजादवच्छेद्यावच्छेदकभावापन्नविषयताविशेषरूपसंशयत्वानिर्वाहात्, तादृशविषयताविशेषस्य समुच्चयसाधारण्यविरहेण विरोधानवगाहिज्ञानसाधारण्येन च कोटिद्वयभानसामग्रीसंवलनस्य विरोधभासकसामग्रीमनपेक्ष्यापेक्ष्य वा तत्प्रयोजकत्वस्यासम्भवदुक्तिकत्वाच्चेति वाच्यम्। विरोधावगाहित्वसहितकोटिद्वयावगाहित्वं संशयत्वमिति प्राचीनसिद्धांतमवलंब्यापाततस्तज्जन्यतानवच्छेदकत्वाभिधानात्।

ज्ञाननिष्ठनिरूपकतानिरूपितत्वमेवेत्यर्थः। एवं कोट्यन्तरविषयकत्वेनेत्यत्र तृतीयार्थावच्छिन्नत्वस्य निरूपकतायामन्वयः। तद्विशेषः। तद्वैलक्षण्यम्, तच्च तादृशज्ञाननिरूपितत्वविशिष्टसमुच्चयविषयताभिन्नत्वम्। कोट्यंशे उत्कटत्वरूपधर्मविशिष्टा संभावनापि संशय एवेति प्रसंगसंगत्याह। संभावनात्वमपीति। तथा च तादृशावच्छेद्याऽवच्छेदकभावापन्नविषयिताविशेषरूपसंशयत्वावच्छिन्नं तादृशसामग्रीद्वयसमाजात् न सिध्यति. अपि तु कारणान्तरादेव। कारणान्तरञ्च अव्याप्यवृत्तित्वज्ञानाभावः। एवञ्च कारणान्तरस्य कार्यतावच्छेदकमुक्तसंशयत्वमित्यभिप्रायेण तस्य कार्यतानवच्छेदकत्वव्यवस्थापनं दीधितिकृतो विरुद्धमिति भावः। तदेव शंकते। न चेति। एवं। प्रतिबन्धकाभावमुद्रयाऽव्याप्यवृत्तित्वज्ञानाभावस्य कारणतावच्छेदकत्वे। सामानाधिकरण्यमात्रप्रयोजकत्वादिति। मात्रपदेनावच्छेद्यावच्छेदकभावापन्नविषयिताव्यवच्छेदः। तत्समाजात्। सामग्रीद्वयसामाजात्। तत्समाजस्य विषयितयोरवच्छेद्यावच्छेदकभावप्रयोजकत्वोपगमे बाधकमाह। तादृशेति। तत्प्रयोजकत्वस्य। अवच्छेद्यावच्छेदकभावापन्नविषयिताप्रयोजकत्वस्य। असंभवदुक्तिकत्वाच्चेति। विरोधभासकसामग्रीमनपेक्ष्य तत्समाजस्य तत्प्रयोजकत्वे

अथैवमपि संशयानुमितिव्यवस्थापनमशक्यम्, विषयताविशेषरूप संशयत्वे परामर्शादिघटितानुमितिसामग्र्याः प्रयोजकत्वकल्पकाभावात् दिति चेन्न। अविरोधज्ञानमनपेक्ष्य सामग्रीसमाजादेकदा एकधर्मिणि तत्तदभावोभयनिश्चयानुमित्यनुदयात्संशयानुमितिसिद्धौ अव्याप्यवृत्तित्वादिज्ञानाभावसमवहितयोः प्रत्यक्षसामग्र्योरिव अनुमितिसामग्र्योरपि संशयत्वावच्छिन्नोत्पत्तिप्रयोजकताया अवर्जनीयत्वात्। न च संशयत्वाघटकीभूता यानिश्चयीयविषयता तस्याः संशयव्यावृत्तये संशयसामग्र्याः तदवच्छिन्नं प्रति प्रतिबन्धकत्वं कल्पनीयम्, संशयसामग्रीत्वं च प्रत्यक्षानुमितिसामग्रीसाधारणं नैकमिति अव्याप्यवृत्तित्वज्ञानाभाव विशिष्टविरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वे कल्पनीये अनुमितित्वस्यैव तत्प्रतिबध्यतावच्छेदकत्वमुपेयते लाघवान्न तु निश्चयत्वस्यैवेति न संशयानुमितिसम्भव इति वाच्यम्। प्रत्यक्षसंशयस्य तादृशविषयताशालित्ववारणाय तदवच्छिन्नं प्रति संशयोपधायकताविशिष्टत्वेनैव सामग्र्याः प्रतिबन्धकताकल्पनात्तद्रूपस्य च संशयानुमितिसामग्रीसाधारणतया तत्र प्रतिबन्धकतान्तराकल्पनादिति वदन्ति।

समुच्चये तादृशविषयिताविशेषापत्तिः। तमपेक्ष्य तथात्वे विरोधानवगाहिज्ञाने तदनुपपत्तिरिति भावः। आपाततः। सामान्यतः। शंकते। अथेति। एवमपि। संशयत्वस्य जन्यतानवच्छेदकत्वेपि। विषयिताविशेषरूपसंशयत्वे। अवच्छेद्यावच्छेदकभावापन्नविषयितारूपत्वे। अविरोधज्ञानमनपेक्ष्येति। अव्याप्यवृत्तित्वज्ञानमनपेक्ष्येत्यर्थः। अनपेक्ष्येत्यन्तं चानुमितेर्विरोधानवगाहित्वेपि संशयत्वोपपत्तिप्रकाशनाय। अव्याप्यवृत्तित्वज्ञानाभावसमवहितयोरिति। तद्ज्ञानसमवधाने समुच्चयरूपानुमितिरिति सूचनाय। अवर्जनीयत्वात्। स्वभाविकत्वात्। अन्यथा विरोधिकोट्यनुमितिसामग्र्योः प्रतिबन्धकताकल्पने गौरवादितिभावः। संशयत्वाघटकीभूतेति। संशयीयविषयतातो निश्चयीयविषयताऽतिरिक्तेत्यभ्युपेत्य। तस्याः। निश्चयीयविषयतायाः। संशयव्यावृत्तये। संशयाऽवृत्तित्वार्थं। संशयव्यावृत्तत्वमवश्यमुपेयम्, अन्यथा संशयस्यनिश्चयकार्यकारित्वापत्तेः। तदवच्छिन्नंप्रति। निश्चयीयविषयत्वावच्छिन्नंप्रति। तत्प्रतिबध्यतावच्छेदकत्वं। तादृशानुमितिसामग्रीप्रतिबध्यतावच्छेदकत्वं। अनुमितित्वस्यैवेति। एवकारव्यवच्छेद्यमाह। नत्विति। विरोधिबोधकसामग्र्याः। विरोधिकोटिद्वयबोधजनकसामग्र्याः। तादृशविषयताशालित्ववारणाय। निश्चयीयविषयताशालित्ववारणाय। तदवच्छिन्नं प्रति। निश्चयीयविषयत्वावच्छिन्नं-

न्यूनाधिकसमबलभावः। सत्यामपि पीतत्वशुक्लत्वस्मृतौ सविधवर्तिनि शङ्खे सति दोषविशेषे पीतत्वस्यैवासति च शुक्लत्वस्यैव दूरस्थे च धर्मिणि असति विशेषदर्शने स्मृतयोरेवकोट्योः सति च एकस्या एव नयनेन ग्रहणम्।

अत एव तुल्यबलसामग्रीसमाजात्प्रत्यक्षस्येव परोक्षस्यापि संशयस्योत्पत्तौ बाधकाभावादेव। आहत्यैव। साक्षादेव। विप्रतिपत्तिवाक्यतोजन्म यस्य एवंभूतं शाब्दबोधात्मकं संशयमपि वदन्तीत्यर्थः।

ननु समानबलत्वं न्यूनाधिकबलत्वं वा सामग्र्याः कथमवधारणीयमित्यत आह। फलबलकल्पनीयश्चेति। सामग्रीसंबलन स्थले एकस्या फलानुत्पत्त्या न्यूनाधिकबलभावः, उभयोः फलोत्पत्त्या समबलभावोऽवधारणीय इत्यर्थः। एतदेव विशिष्यावधारयति सत्यामपीति। पीतत्वशुक्लत्वस्मृताविति सविधवर्तिनि शंख इत्याभ्यां विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षघटिततत्तदुभयत्वे विशिष्टप्रत्यक्षसामग्रीसत्त्वं दर्शितं।

दोषविशेषे पीतद्रव्यसमवधानरूपे पीतत्वस्यैव ग्रहणादित्यग्रिमेणान्वयः। तथा च फलबलात् श्वैत्यादिलौकिकप्रत्यक्षसामग्रीतो दोषविशेषोपबृंहितपीतत्वशुक्लत्वाभावादिग्राहकसामग्र्या बलवत्त्वमिति भावः। दोषविशेषारूत्त्वे उपनीतभानसामग्र्यपेक्षया लौकिकसंन्निकर्षघटितविरोधिग्रहसामग्र्या बलवत्त्वमित्याह। असति च शुक्लत्वस्यैवेति। दोषविशेषासमवधानस्थले उपनयघटितसामग्रीद्वयस्य तुल्यबलत्वमाह। दूरस्थ इति। धर्मिणो दूरस्थत्वेऽसति च विशेषदर्शने विद्यमानकोटेरपि न लौकिकसामग्री दूरत्वदोपस्य विशेषादर्शनसहितस्य लौकिकधी-

प्रति। संशयोपधायकताविशिष्टत्वेनैवेति। एवकारेण निश्चयीयविषयत्वावच्छिन्नस्य व्यावृत्तिः। संशयोपधायकतानिवेशात्संशयस्वरूपयोग्यताव्यावृत्तिः। अन्यथा एकैकपरामर्शादपि "निश्चयात्मका" अनुमित्यनुपपत्तिः, एकैकपरामर्शस्य स्वरूपयोग्यत्वादिति भावः। तद्रूपस्य। संशयोपधायकतावैशिष्ट्यस्य। तत्र। अनुमितौ। तथा च संशयानुमितिर्निष्प्रत्यूहैवेतिभावः। ननु संशयमात्रस्यैव प्रत्यक्षत्वनियमात्तत्सामग्रीविरहे कुतः संशयानुमितिरत आह। दीधितौ-अतएवेति। तुल्यबलसामग्रीसमाजात्। विरूद्धोभयप्रकारकज्ञानसामग्रीसमाजात्। विप्रतिपत्तिवाक्यतः कोटिद्वयोपस्थित्या उत्तरकालं मानस एव संशयो भवतीति शंकानिराकरणाय-आहत्यैवेत्युक्तम्। शाब्दबोधात्मकमिति। तथा च शाब्दे एव संशये व्यभिचारादुक्तनियमो नास्तीति भावः। एकस्याः।

अथैवमुद्बुद्धाभ्यां विरोधिसंस्काराभ्यां स्मरणमपि संशयात्मकं स्यात्, किं न स्याद्यदि च नानुभवबाधः येन गुरुणापि निश्चयत्वेन संस्कारजनकत्वमुपेयते भवता ।

विरोधित्वादिति लौकिकसामग्रीविघटनाय दूरस्थत्वविशेषादर्शनयोरनुधावनम् । स्मृतयोरित्युपनयसंपादनाथ । कोट्योः—स्थाणुत्वतदभावयोः । विशेषदर्शनघटितसामग्र्या बलवत्त्वमाह । सति चेति । सति च विशेषदर्शने, एकस्याः-गृहीतविशेषायाः, कोटेरेव नयनेन ग्रहणात् अत्र ग्राह्यविपरीतविशेषदर्शनस्यैव प्रतिबन्धकत्वं न तु सामग्र्या इत्यवधेयम ।

ननु कोटिद्वयभासकसामग्रीसमाजादेव चेत्संशयः तदा संस्कारं प्रति निर्णयत्वेन हेतुतयापि न संशयाकारस्मरणवारणसम्भवः प्रत्येकतत्तदभावगोचरनिश्चयजन्यसंस्कारद्वयसंवलनात्तदुत्पत्तौ बाधकाभावादित्याशङ्कते । अथैवमिति । उद्बुद्धाभ्यामिति । न चोद्बोधकस्य फलैकोन्नेयतया एकदा विरुद्धकोटिद्वयोद्बोधकाऽकल्पनान्नापत्तिरिति वाच्यम् । नियतोद्बोधकसम्बन्धिवस्तुविशेषज्ञानादीनामनुगतरूपेणैव कारणतायाः क्लृप्तत्वात्तादृशोद्बोधकद्वयसमवधानदोषाद्यत्र तत्रैवापत्तिसम्भवात् । अनुभवविरोधविरहे इष्टापत्तिमाह । किं न स्यादिति । अनुभवविरोधस्य सविवादतया यदीति । येन-अनुभवविरोधेन । भवतेत्यनेन परस्परसामग्रीप्रतिबन्धकताकल्पनमन्तरेण तावतापि संशयाकारस्मरणवारणं न सम्भवतीति सूचितम् ।

सामग्र्याः । सविधवर्तिनि । निकटवर्त्तिनि । निर्णयत्वेन हेतुतयापीति ज्ञानत्वेन तद्धेतुत्वेतुसंशयात्संस्कारोत्पत्त्या संशयात्मकस्मरणापत्तेरितिभावः । तदुत्पत्तौ । स्मृत्युत्पत्तौ । दीधितौ-एवं । तुल्यबलविरुद्धोभयग्रहसामग्रीभ्यां संशयस्यार्थवशसंपन्नत्वे । विरोधिसंस्काराभ्यां । एकधर्मिकतत्तदभावसंस्काराभ्यां । संशयात्मकं स्यादिति । तथा चाऽन्यायत्या यथा निश्चयात्मकस्मृतित्वं संस्कारजन्यतावच्छेदकं तथा निश्चयात्मकानुमितित्वमेव परामर्शादेरिति न संशयनुमितिसंभव इति भावः । उद्बोधकानां विशिष्यैव स्मृतिहेतुतया एकधर्मिणि तत्तदभावसंस्कारयोरेकदोद्बोधक एवाऽसंभवीत्याशंकते । नचेति । फलैकोन्नेयतया । फलबलकल्प्यतया । नियतोद्बोधकेति-ज्ञानान्वयि । तत्रैवाऽऽपत्तिसंभवादिति । इदमुपलक्षणम् । यस्य पुंसः समानधर्मिकतत्तदभावचाक्षुषसामग्र्योरिव समानधर्मिकतत्तदभावगोचरस्मृतिद्वये अनुगतरूपेणो-

अथ विरोधिनो निर्णयोऽनुमितिप्रतिबन्धको विरोधित्वञ्च सहानवस्थायित्वं साध्याभावस्येव तद्व्याप्यस्यापीति चेत्। यदि वस्तुतो विरोधिनो निर्णयस्तथा, कथं तर्हि पक्षतावच्छेदकादेस्तादृशस्य निश्चये भ्रमानुमितिः। अथ विरोधित्वेन, तदा तदग्रहे नेह साध्यमित्यादिनिर्णयेऽप्यनुमितिप्रसङ्गः।

बाधबुद्धेरत्यन्तान्योन्याभाववत्ताधीसाधारणविरोधिप्रकारकत्वेनैव प्रतिबन्धकता, तथात्वं च विरोधिपरामर्शस्यापीति मूलोक्तसिद्धान्तं दूषयितुमाशङ्कते अथेति। विरोधित्वं-तदभावव्याप्यत्वं स्वव्यापकतदभावकत्वरूपं स्वत्वघटितत्वेन न सर्वसाधारणमित्यत आह सहानवस्थायित्वमिति। विरोधस्य विषये उपलक्षणत्वं विशेषणत्वं वेति वितर्क्य दूषयति यदीत्यादिना। तथा-प्रतिबन्धः। पक्षतावच्छेदकादेरिति। इदन्त्वाद्यवच्छिन्नह्रदादिरूपपक्षविशेषणस्य हेतुत्वेनाभिमतस्य वा तादृशस्य वस्तुगत्या वन्ह्यादिविरोधिनो निर्णये भ्रमानुमितिनिर्णयाधीनत भ्रमानुमतिर्नभवतीत्यर्थः। तत्र जनकज्ञानस्यैवोक्तप्रतिबन्धकतावच्छेदकाक्रान्तत्वादितिभावः।

द्बोधकस्य हेतुत्वं तत्रैव च विरुद्धसंस्कारयोरेकदोद्बोधसंभवादित्यपि बोध्यम्। अनुभवविरहे। स्मृतेरानुभविकत्वे। इष्टापत्तिमाहेति। स्मृतेःसंशयत्वमिष्टमेवेत्याहेत्यर्थः। सविवादतयेति। स्थाणुत्वतदभाववदिदं स्मरामीत्यनुभवस्य सविवादतयेत्यर्थः। अनुभवबाधे तु उभयकोट्योर्विशेषदर्शनदशायामेकधर्मिकतत्तदभावचाक्षुषसामग्र्योरिव समानधर्मिकतत्तदभावस्मृतिसामग्र्योरपि मिथोविरुद्धत्वं कल्पनीयमिति ध्येयम्। निश्चयत्वेन हेतुत्वोक्तावपि अनुगतोद्बोधकस्थले स्मृतेःसंशयत्वावारणादित्याशयेनोक्तं भवतेति। परस्परेत्यादि। एककोटिस्मृतिसामग्र्या अपरकोटिस्मृतिप्रतिबन्धकत्वकल्पनमन्तरेणेत्यर्थः। तावतापि। निश्चयत्वेन कारणत्वोपगमेनापि। तादृशप्रतिबध्यप्रतिबन्धकभावस्वीकारे तु निश्चयत्वेन कारणत्वं व्यर्थमेवेति विभावनीयम्। तथात्वं च। विरोधिप्रकारकत्वेन प्रतिबन्धकत्वं च। मूलोक्तसिद्धान्तं। विरोधिज्ञानत्वस्य प्रतिबन्धकत्वे तन्त्रत्वादितिग्रन्थेनेत्यादिः। स्वव्यापकेति। स्वं हेतुः। न सर्वसाधारणमिति। अननुगतमितियावत्। इदमुपलक्षणम्। तदभावव्याप्यत्वं तदभावाभाववदवृत्तित्वं, एवं च तदभावाभावत्वेनप्रवेशे गौरवंबोध्यम्। सहानवस्थायित्वं। तच्च स्वाधिकरणावृत्तित्वं। उपलक्षणत्वं विषयान्वयित्वम्। ज्ञानान्वयित्वं च विशेषणत्वम्। विषयत्वान्वयित्वमितियावत्। दीधितौ-वस्तुतः। वस्तुगत्या। जलमयो वन्हिमानित्यनुमितौ तज्जनकपरामर्शस्य "वह्निव्याप्यवान् जलमयत्ववानित्याकारकस्य" न विरोधितासंभवः, जलमयत्वांशे निर्धर्मितावच्छेदककत्वात्तस्येत्यतोव्याचष्टे। इदन्त्वाद्यवच्छिन्नह्रदादिरूपपक्ष-

यद्यपि जलमयत्वादेर्विरोधानवगाहिज्ञानदशायां तदनवच्छिन्न-पक्षावगाहिन्यास्तदलिङ्गिकायाश्चायं वह्निमानित्याद्यनुमितेरपि पक्षता-वच्छेदकावच्छिन्ने जलमयत्वभ्रमदशायामनुपपत्तिरस्ति, तथापि जलमयोऽयंवह्निमानित्याद्यनुमितिस्थले प्रतिबन्धकनैयत्येन तथाविधा-नुमितिमात्रोच्छेद इत्यभिप्रायेण यावद्दूरानुसरणम् ।

अथ विरोधित्वेनेति । निर्णयस्तथेत्यनुपद्यते । तदग्रहे वन्ह्य-भावादौ वन्ह्यादेर्विरोधाग्रहे । अनुमितिप्रसङ्ग इति । तथा च वन्ह्य-भावत्वावच्छिन्नावगाहिनिश्चयत्वेनैव विशिष्य बाधबुद्धेः प्रतिबन्ध-कता वाच्या, तच्च न विरोधिपरामर्शसाधारणमिति भावः । इद-मुपलक्षणम् । अनुगततत्तदधिकरणावृत्तित्वरूपविरोधावच्छिन्नप्रकार-कनिश्चयत्वेन विरोधित्वे स्वव्यापकतत्सामानाधिकरण्यरूपव्याप्यत्वा-वगाहिविरोधिपरामर्शस्य तद्रूपानाक्रान्ततया तादृशपरामर्शाभ्यां संशयानुमितिजनने बाधकाभावः । एवं तत्सम्बन्धेन तदधिकरणा-वृत्तित्वरूपविरोधावच्छिन्नस्य तत्सम्बन्धावगाहिज्ञानमेव विरोधीति सम्बन्धविशेषनिवेशस्यावश्यकतया विशेषणताविशेषादिसंसर्गक-ग्राह्याभावादिज्ञानसम्बन्धान्तरावगाहिविरोधिपरामर्शयोर्नानुगतरूपेण प्रतिबन्धकतासम्भव इत्यपि बोध्यम् ।

विशेषणस्येति । जलमयत्वादेरितिशेषः । हेतुत्वाभिमतस्य । हेतोः । विरोधिजलमयत्वादेस्तदभाववदवृत्तित्वरूपव्याप्यवगाहिपरामर्शस्य तदभावीय-विरोधानवगाहित्वादाह वस्तुगत्यावन्ह्यादिविरोधिनः । वस्तुगत्येति । जलमयत्वादेः । निर्णयेइति । जलमयोऽयमिति-वन्हिव्याप्यजलमयत्ववानिति वा निर्णये इत्यर्थः । तत्र । जलमयोऽयं वन्हिमान्. अयं वन्हिमान् जलमयत्वा-द्वेत्यनुमितौ । जनकज्ञानस्य । जलमयोयं, वन्हिव्याप्यजलमयत्ववानिति वा ज्ञानस्य । उक्तेति । तदधिकरणावृत्तित्वरूपेत्यर्थः । जलमयत्वादेर्विरोधा-वगाहिज्ञानदशायां अयं वन्हिमानित्यनुमितिरेव नोत्पद्यते इत्यतो विरोधान-वगाहिदशायामिति । तदनवच्छिन्नेति । जलमयत्वानवच्छिन्नेत्यर्थः । तदलिंगिकाया इति । जलमयत्वालिंगिकाया इत्यर्थः । अनुपपत्तिरस्तीति । अयं वन्हिमानित्यनुमितेरेवानुपपत्तिसंभवे जलमयत्वस्यानुधावनं व्यर्थमिति भावः । विशेषणत्वपक्षेत्वाह । अथेति । निश्चयत्वेनैवेति । एवकारेण विरोधि-त्वस्य व्यावृत्तिः । तच्च । वन्ह्यभावत्वावच्छिन्नावगाहिनिश्चयत्वं च । न विरोधिपरामर्शसाधारणमिति । न विरोधिपरामर्शवृत्तीत्यर्थः । तथा च संशयानुमितिर्निष्प्रत्यूहैवेति भावः । विरोधविशिष्टवन्ह्यभावविषयकत्वेन

अथ विशेषदर्शनं विरोधिबुद्धिप्रतिबन्धकं कथमन्यथा तदनन्तरं न भ्रमसंशयाविति चेन्न। सत्यपि शुक्लत्वादिव्याप्यदर्शने शङ्खादौ दुष्टेन नयनेन पीतत्वादेरदुष्टेन च पीतत्वादिव्याप्यवत्तानिश्चये सत्यपि शुक्लत्वादेर्ग्रहात्। सति च विशेषदर्शने क्वचिदुपनीतभानानुदयाद् दूरतः प्रमितस्य स्थाणुत्वादेः शाखादौ करादिभ्रमेणाग्रहात् तत्तत्स्थलविशेष एवं तस्य प्रतिबन्धकत्वमिति।३

ननु मा भूद्बाधबुद्धिप्रतिबन्धकतावच्छेदकरूपाक्रान्तत्वं विरोधिपरामर्शस्य, तथापि संशयानुमित्यसम्भवः स्थाणुत्वाभावव्याप्यकरादिमानित्यादिनिश्चये स्थाणुत्वादिप्रत्यक्षभ्रमसंशयानुदयात्तद्विशिष्टबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकताया आवश्यकत्वादित्याशङ्कते। अथेति। शुक्लत्वादीति। पीतत्वाभावादित्यर्थः। दुष्टेन-पित्तादिदूषितेन। पीतत्वादीति। शुक्लत्वाभावादीत्यर्थः। नन्वेवं संशयत्वं प्रतिबध्यविशेषणं देयमित्याशङ्कामुपनीतभानविशेषसंग्रहं प्रदर्श्य दूषयति। सति चेति। विशेषदर्शने-विरोधिव्याप्यदर्शने, द्वितीयानुरोधेन च लौकिकसन्निकर्षाजन्यत्वं प्रथमानुरोधेन दोषविशेषाजन्यत्वं प्रतिबध्यविशेषणं देयमित्यत

प्रतिबन्धकत्वाभिमानमपि निराकरोति। इदमुपलक्षणमिति। परामर्शे विरोधाभाने प्रथमं दूषणम्। तत्र विरोधभानोपगमेपि एवमित्यादिना दूषणम्। विरोधस्योपलक्षणत्वे वन्हितदभावव्याप्तिप्रकारकवास्तववन्हिव्याप्तिविषयकपरामर्शाभ्यामनुमित्युत्पत्तौ बाधकाभावोपि वोध्यः। संबन्धान्तरावगाहि। हेतावच्छेदकसंबन्धावगाहीत्यर्थः।

बाधबुद्धिप्रतिबन्धकतावच्छेदकरूपाक्रान्तत्वमिति। बाधनिश्चयनिष्ठप्रतिबन्धकतावच्छेदकीभूतसाध्याभाववत्तानिश्चयत्वाक्रान्तत्वमित्यर्थः। तथापि। विरोधिपरामर्शस्य तादृशरूपानाक्रान्तत्वेपि। स्थाणुत्वादिप्रत्यक्षभ्रमसंशयानुदयादिति। अयं स्थाणुः-इतिभ्रमस्य अयं स्थाणुर्नवेति संशयस्य चानुदयादित्यर्थः। दीधितौ-विशेषदर्शनं। तदभावव्याप्यवत्तानिश्चयः। विरोधिबुद्धिप्रतिबन्धकं। तद्वत्ताबुद्धिप्रतिबन्धकं। अन्यथा। तद्वत्ताबुद्ध्यप्रतिबन्धकत्वे। तदनन्तरं। स्थाणुत्वाभावव्याप्यकरादिमानयमितिनिश्चयानन्तरं। न भ्रमसंशयाविति। विपरीतस्येत्यादिः। अयं स्थाणुरिति भ्रमः। अयं स्थाणुर्नवेति संशय इत्यर्थः। तथा च तदापत्तिरिरिभावः। एवं च विशिष्टबुद्धिसामान्ये एव तस्या प्रतिबन्धकत्वे कथं संशयानुमितिरिति शंकितुराशयः। तद्वत्ताबुद्धिमात्रे न विशेषदर्शनत्वेन प्रतिबन्धकत्वं,

(अत्राहुः)—अनुगतकार्य्यकारणभावानुरोधात् दोषविशेषाद्यजन्ये ज्ञाने कदाचिद-नुभवे वा विशेषदर्शनं विरोधि कल्प्यते । न च प्रत्यक्ष एव तथा ।

आह दूरत इति। प्रमितस्य करादिभ्रमात्प्राक्प्रमापकलौकिकसंन्नि-कर्षाश्रयस्य। एतेन करादिभ्रमदशायामपि दूरत्वादेव स्थाणुत्वग्रह इति शङ्का निराकृता। अग्रहादिति। तथा च लौकिकसन्निकर्षा-द्यजन्यत्वनिवेशे तत्र स्थाणुत्वादिप्रत्यक्षापत्तेस्तन्निवेशो न संभवतीति भावः। स्थलविशेष इति। यद्यद्व्यक्तिसत्वे विशिष्टबुद्धिर्न जायते तत्तद्व्यक्तेरेव विशिष्य विशिष्टबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकत्वं वाच्यमित्यर्थः। तथा च कोट्यन्तरविशेषदर्शनसहितविशेषदर्शन-व्यक्तीनां प्रतिबन्धकत्वाकल्पनात्संशयानुमितिर्निष्प्रत्यूहैवेतिभावः।

किं तु प्रत्यक्षात्मकतद्वत्तावुद्धावेव. तच्चानुमितेः संशयत्वे न बाधकमित्यत आह सत्यपीत्यादि। पित्तादिदूषितेन। पित्तादिदोषदूषितेन। पीतत्वादेरिति। अस्य ग्रहादित्यनेनाऽन्वयः। शुक्लत्वाभावादेरित्यपि बोध्यम्। तथा च व्यभिचारान्नोक्तप्रतिबध्यप्रतिबन्धकभावसंभवः। एतेन प्रतिबध्यता-वच्छेदककोटौ दोषविशेषाजन्यत्वं समर्थितम्। ननु प्रमात्मकविशिष्टबुद्धिं-प्रति विशेषदर्शनं विरोधि अतआह। अदुष्टेन चेति। नयनेनेत्यनुषंगः। अस्य-शुक्लत्वादेर्ग्रहादित्यनेनान्वयः। अत्रापि व्यभिचार इति भावः। एतेन लौकिकसन्निकर्षाजन्यत्वं समर्थितम्। एवं। उक्तनिश्चयद्वये व्यभिचारवारणायेति यावत्। प्रतिबध्येति। प्रतिबध्यतावच्छेदककोटौ। उपनीतभानेति। ज्ञानलक्षणासन्निकर्षजन्येत्यर्थः। असंग्रहंप्रदर्श्येति। तस्यापि संशयानात्मकत्वा-दिति भावः। दूषयति। प्रतिबन्धकत्वानुपपत्या दूषयतीत्यर्थः। क्वचित्। दोषविशेषासमवधाने। उपनीतभानानुदयादिति। अस्य प्रतिबन्धकत्व-मित्यनेनाऽन्वयः। प्रथमस्थलानुरोधेन पीतः शंख इति ग्रहार्थम्। द्वितीय-स्थलानुरोधेन श्वेतःशंखइतिग्रहार्थम्। प्रतिबध्यविशेषणमिति। प्रति-बध्यतावच्छेदककोटौ विशेषणमित्यर्थः। तथा च लौकिकसन्निकर्षाजन्यदोष-विशेषाजन्यतद्वत्ताबुद्धि प्रति तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वमिति भावः। तथाच क्व संशयानुमितिवार्ता। उक्तप्रतिबन्धकतावच्छेदकाक्रान्ततया च नोक्तोपनीतभानापत्तिः। लौकिकसन्निकर्षाश्रयस्य। एतेन विशेष-दर्शनात्पूर्वं प्रमोत्पादनिर्वाहार्थं दूरत्वदोषस्याऽप्रतिबन्धकत्वं सूचितम्। निराकृतेति। तथा सति प्रागपि स्थाणुत्वाद्यग्रहप्रसंगात्। दीधितौ। स्थाणुत्वादेरिति। अग्रहादित्यनेनाऽन्वयः। शाखादौ करादिभ्रमेचेति। स्थाणुत्वाभावव्याप्यकरादिना शाखादिमत्वभ्रमे चेत्यर्थः। स्थाणुत्वाभावव्याप्य-

क्वचिल्लौकिकसन्निकर्षजन्यज्ञाने दूरत्वादिसहकृततत्तदभावव्याप्य-भ्रमस्य विरोधित्वेपि लौकिकसन्निकर्षाद्यजन्यविशिष्टबुद्धित्वाद्यवच्छिन्नं प्रति तदभावव्याप्यनिश्चयत्वेनानुगतैकप्रतिबन्धकता कल्पनमुचितं तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वेऽनन्तप्रतिबन्धकताप्रसङ्गात्, दूरत्वादि-दोषसहकृतविशेषदर्शनस्य च प्रतिबध्यतावच्छेदककोटौ लौकिकान्य-त्वमनिवेश्य प्रतिबन्धकत्वान्तरं कल्पनीयमिति समाधत्ते। अनुगतेति दोषविशेषादीत्यादिना लौकिकसन्निकर्षपरिग्रहः। दोषविशेषजन्य-ज्ञानेपि साक्षात्कारित्वव्यञ्जकविषयताविशेषोपगमात्तच्छून्यत्वं निवेश्यैव दोषविशेषजन्यलौकिकसन्निकर्षजन्यज्ञाने व्यावर्त्तनीये, एवं च परमेश्वरबुद्धावपि तादृशविषयताया एव स्वीकारान्न नित्य-साधारण्यं, न वानुगतधर्मस्य प्रतिबध्यतावच्छेदकत्वे चक्षुःसन्नि-

करादिमानयमिति भ्रमे इति यावत् तत्र। भ्रमे। स्थाणुत्वादिप्रत्यक्षा-पत्तेरिति। स्थाणुरयमित्यादिप्रत्यक्षापत्तेरित्यर्थः। तस्य लौकिकसन्निकर्ष-जन्यत्वादिति भावः। तन्निवेशः। लौकिकसन्निकर्षाजन्यत्वनिवेशः। विरोधि-दर्शनाऽसत्वे दोषमात्रं न प्रतिबन्धकं, विशेषदर्शनमात्रं च लौकिकज्ञाने न प्रतिबन्धकं इति विशेषदर्शनदोषयोरुभयोरुपादानम्। क्वचित्। दूरत्वदोष-सहितविशेषदर्शनसमवधाने। लौकिकसन्निकर्षजन्यज्ञाने। स्थाणुत्व-प्रकारकलौकिकप्रत्यक्षे। तदभावव्याप्यवत्ताभ्रमस्य। स्थाणुत्वाभाव-व्याप्यकरादिमत्ताभ्रमस्य। लौकिकान्यत्वमनिवेश्येति। लौकिकसन्नि-कर्षाजन्यत्वनिवेश्येत्यर्थः। कल्पनीयमिति। दोषसमवहिततद्विशिष्टबुद्धि प्रति दोषसहकृतविशेषदर्शनस्य प्रतिबन्धकत्वं कल्पनीयमित्यर्थः। भ्रमसामान्यस्यै-वाऽसंग्रहापत्तेः। दीधितौ-दोषविशेषेति। पित्तमण्डूकवसाञ्जनादिरूपे-दोषेत्यर्थः। तच्छून्यत्वं। साक्षात्कारित्वव्यंजकविषयिताशून्यत्वं। तथा च साक्षात्कारत्वानिरूपितविषयताशालित्वं प्रतिबध्यतावच्छेदकमिति भावः। निवेश्यैवेति। एवकारेण लौकिकसन्निकर्षाजन्यत्व-दोषविशेषाजन्यत्वयोः व्यावृत्तिः। तादृशविषयिताशून्यत्वनिवेशस्य प्रयोजनमाह एवंचेति। साक्षात्कारित्वव्यंजकविषयिताशून्यत्वनिवेशे चेत्यर्थः। तादृशविषयिताया एवेति। साक्षात्कारित्वव्यंजकविषयिताया एवेत्यर्थः। न नित्यसाधारण्य-मिति। तादृशविषयिताशून्यत्वविरहादिति भावः। अन्यथा ईश्वरबुद्धे-र्लौकिकसन्निकर्षाजन्यत्वात्, दोषविशेषाजन्यत्वाच्च प्रतिबध्यतावच्छेदकाक्रान्तत्वा-पत्तिः स्यादिति ध्येयम्।

तन्निवेशस्य प्रयोजनान्तरमाह। नवेति। अनुगतधर्मस्य। चक्षुस्त्वक्सन्निकर्षप्रभृति-साक्षात्कारित्वव्यंजकविषयिताशून्यबुद्धित्वस्य। 

कर्षादिजन्यभेदानामेकत्र निवेशनीयतया मिथो विशेषणविशेष्यभावे विनिगमनाविरहप्रसंगाच्चक्षुःसंयोगाद्यजन्यचाक्षुषत्वादीनां जन्यतावच्छेदकत्वापत्तिः, अन्धकारे चक्षुः संयोगदशायां घटोपनीतभानस्य चक्षुः सन्निकर्षजन्यत्वेन प्रतिबध्यतावच्छेदकानाक्रान्ततया विशेषदर्शनकालेऽपि तादृशोपनीतभानापत्तिश्चेति । एवं अनाहार्यत्वस्यापि निवेशो वाच्यः । तेनाहार्यचाक्षुषादीनां विरोधिनिर्णयाप्रतिबध्यत्वोपपत्तिः । आहार्यत्वं च स्वविषयकेच्छाव्यवहितोत्तरक्षणोत्पन्नप्रत्यक्षत्वं विषयत्वस्वाव्यवहितोत्तरत्वोभयसम्बन्धेन इच्छावच्छिन्नप्रत्यक्षत्वं वा,

भेदानामिति । लौकिकसन्निकर्षत्वस्याननुगततया तत्तत्सन्निकर्षजन्यान्यत्वेन निवेशे इत्यादिः । चक्षुःसन्निकर्षजन्यभेदविशिष्ट-त्वक्सन्निकर्षजन्यभेदविशिष्ट-घ्राणसन्निकर्षजन्यभेदविशिष्ट-रसनसन्निकर्षजन्यभेदविशिष्ट-श्रोत्रसन्निकर्षजन्यभेदानामित्यर्थः । एकत्र । बुद्धौ । चक्षुसंयोगजन्यभेदविशिष्टचाक्षुषत्वप्रकारकेच्छानुत्तरप्रत्यक्षत्वं-त्वक्संयोगजन्यभेदविशिष्टस्पार्शनत्वप्रकारकेच्छानुत्तरप्रत्यक्षत्वं वा न प्रतिबध्यतावच्छेदकं चाक्षुषत्वादीच्छासत्वे स्पार्शनाद्यापत्तेरतश्चाक्षुषत्वादिनिवेशः । जन्यतावच्छेदकत्वापत्तिरिति । प्रतिबध्यतावच्छेदकत्वापत्तिरित्यर्थः । चक्षुसंयोगाद्यजन्यचाक्षुषत्वादीनां विरोधिव्याप्यवत्तानिश्चयाभावकार्यतावच्छेदकत्वे संशयानुमितिनिराकरणमशक्यमिति न तत्रेष्टापत्तिरिति ध्येयम् । एवं दोषविशेषाणामननुगतत्वाद्दोषविशेषाद्यजन्यत्वं नैकं किन्तु दोषविशेषादिजन्यतत्तद्बुद्धीनां भेदवत्वमेव वाच्यम्, तथा च तावद्भेदानां विशेष्यविशेषणभावे विनिगमनाविरहप्रसंगात्. प्रातिस्विकरूपेण तत्तद्विशिष्टबुद्धिं प्रति तत्तद्विशेषदर्शनत्वेन नानन्तप्रतिबध्यप्रतिबन्धकभावापत्तिः । न चेष्टापत्तिः । अवच्छेदकलाघवेपि संशयानुमितेर्निरावाधात्. अनुमितौ तस्य विरोधित्वे मानाभावात् । तथा च साक्षात्कारत्वानिरूपिततत्तन्निष्ठप्रकारताकबुद्धिं प्रति तदभावव्याप्यवत्तानिश्चयत्वेन विरोधित्वं, साक्षात्कारत्वनिरूपिता च विलक्षणविषयता लौकिके इव दोषविशेषजन्येपि प्रत्यक्षे अनुगतैव. रजते इव शुक्तावपि रजतत्वज्ञाने रजतं साक्षात्करोमीत्यनुभवात् । ननु सत्यपि विरोधिव्याप्यवत्ताज्ञाने सत्यामपीच्छायां तद्वत्ताबुद्ध्यनुत्पादप्रसंग इत्यत आह एवमिति । अनाहार्यत्वस्यापीति । अपिना साक्षात्कारत्वानिरूपितविषयताशालित्वस्य समुच्चयः । तेन । प्रतिबध्यतावच्छेदककोटावनाहार्यत्वनिवेशेन । आहार्यचाक्षुषादीनामिति । घटाभाववद्भूतलमितिवाधनिश्चयः तदुत्तरभूतले घटज्ञानं जायतामितीच्छा तदुत्तरं घटवद्भूतलमिति चाक्षुषादीनामित्यर्थः ।

सामान्ये बाधकाभावात्, बोध्याभावव्याप्यवत्तानिश्चयेन शाब्दादिधीप्रतिबन्धाच्च।

आहार्यचाक्षुपादौ चाक्षुपादीच्छाया हेतुत्वोपगमान्नेच्छां विना विरोधिनिश्चयदशायां तदुत्पत्तिः। कदाचिदिति। यदि विशेष-दर्शनं परिभूय ज्ञानमुत्पद्यते तदधीनस्मरणमपि विशेषदर्शनकाले अनुभूयते तदेत्यर्थः। वस्तुतस्तु विशेषदर्शनकाले पूर्वजातविशिष्ट-ज्ञानत्वमेव स्मर्यते न तु तद्विपयीभूतं विशिष्टं यावद्विशेषदर्शनेना प्रामाण्यं गृह्यते, तथा च ज्ञानत्वमेव प्रतिबध्यतावच्छेदकं नत्वनुभव-त्वं अनुभवत्वजातेरप्रामाणिकत्वात्स्मृतिभिन्नज्ञानत्वस्य तथात्वे गौरवात्प्रत्यक्षस्य तथात्वमाशङ्कते न चेति। समाधत्ते। सामान्य इति। सामान्यधर्मज्ञानत्वस्य तथात्वे बाधकाभावादित्यर्थः।

दर्शितौ दोपविशेषाद्यजन्ये ज्ञाने इति। अस्य विशेपदर्शनं विरोधि कल्प्यते इत्यनेनान्वयः। तदभावविशेषदर्शनदशायां तद्वत्तासंस्कार-स्यानुद्बोधे प्रमाणाभावादाह। कदाचिदिति। तदधीनं। तद्ज्ञानाधीनं। ननु अनुभवत्वावच्छिन्नं प्रति व्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वे लौकिकसन्निकर्षाधीनस्मृतेरनुत्पादेन तत्संस्कारस्यैवोद्बोधकस्य चरमकारणं न कल्प्यते इति वाच्यम्। विरोधिपरामर्शानन्तरमेतत्संस्काराद् घटादिरूपानुगतोद्बोधकाच्च स्मृतेरुत्पादेन तयोः कारणत्वस्यावश्यकत्वात्। न च संस्कारस्य कालादिनाश्यत्वात् विरोधिज्ञाननाश्यत्वेन विशेपदर्शनकाले तन्नाशात् स्मरणस्य कार्यसहभावेन हेतुतया न तदापत्तिरिति वाच्यम्। तथापि समूहालंबनसंस्कारयोस्तस्य चरमफलनाश्यत्वेन विशेपदर्शनेन तस्यानाशात्तदा-पत्तेर्दुर्वारत्वापत्तेः। न चानुभवत्वं स्मृतिभिन्नज्ञानत्वं, तथा च लौकिक-सन्निकर्षाधीनस्मृतिभिन्नज्ञानत्वावच्छिन्नं प्रति प्रतिबन्धकत्वकल्पनान्न तदापत्तिरिति वाच्यम्। एवमपि लौकिकसन्निकर्षजन्यानुभवजन्यभिन्नविपयकसमूहालंबनसंस्कार-तदधीनस्मृतेः लौकिकसन्निकर्षाधीनतया तदापत्तेर्दुर्वारत्वादिति चेन्न। लौकिक-सन्निकर्षप्रयोज्यतद्विपयताशालिस्मृतिभिन्नज्ञानत्वावच्छिन्नं प्रति एव प्रतिबन्धकत्व-कल्पनात्। तथा च लौकिकसन्निकर्षाधीनस्मृतिविषयतया लौकिकसन्निकर्षा-प्रयोज्यत्वेन तद्विपयकस्मृत्यापत्तिरिति। न च लौकिकसन्निकर्षप्रयोज्यबुद्धिं प्रत्येव प्रतिबन्धकत्वकल्पने निरुक्तदोषवारणे गुरुतरप्रतिबध्यतावच्छेदकं विफलमितिवाच्यम्। शाब्दबोधादिकं प्रत्यपि विशेषणज्ञानविधया लौकिक-सन्निकर्षजन्यज्ञानस्य कारणत्वात्, तेपामपि लौकिकसन्निकर्षप्रयोज्यत्वविरहेण प्रतिबध्यत्वानुपपत्तिः। न च तथापि तत्प्रकारकबुद्धिं प्रत्येव प्रतिबन्धकत्वकल्पना-न्नोक्तस्थले आपत्तिरिति वाच्यम्। तथाप्यन्तराधर्मितावच्छेदकविशिष्टवैशिष्ट्या-

ननु संशयानुमितेः सन्दिग्धतया ज्ञानत्वस्य विरोधिपरामर्शाभाव-जन्यतावच्छेदकत्वकल्पना न सम्भवति व्यभिचारसंशयस्य विरोधित्वादित्यत आह बोध्याभावेति। शाब्दादीत्यादिना उपमितिस्मृति परिग्रहः। तथा च ज्ञानस्य तथात्वे शाब्दादिस्थले स्वतन्त्रप्रतिबन्धकत्वाकल्पने लाघवात् व्यभिचारसन्देहोऽकिंचित्कर इति भावः।

वगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन कारणत्वात्। लौकिकसन्निकर्षप्रयोज्यज्ञानस्यापि कारणत्वेन विशेष्यताया अपि तत्कार्यतावच्छेदकतावच्छेदकत्वेन तस्यापि प्रयोज्यतया तदंशे ज्ञानस्य प्रतिबध्यत्वानुपपत्तिः। न च लौकिकसन्निकर्षाजन्ययोग्यताज्ञानजन्यशाब्दबोधस्तज्जन्यसंस्कारस्तज्जन्यस्मृतेरपि लौकिकसन्निकर्षप्रयोज्यतया विशेषदर्शनकाले तदापत्तिरिति वाच्यम्। लौकिकसन्निकर्षजन्यानुभवतज्जन्ययोः संस्कारस्तज्जन्यस्मृतिभिन्नत्वस्यैव कार्यतावच्छेदककोटौ निवेशेन उक्तस्मृतेरपि तद्भिन्नतया प्रतिबध्यत्वेन तदापत्तेरयोगादिति ध्येयम्। तथा च अनुगतरूपेणोद्बोधकस्य हेतुत्वे स्मरणेपि विशेषदर्शनस्य विरोधित्वे च। प्रतिबध्यतावच्छेदकमिति। एवंच पूर्वमतमेव सम्यगित्याशयः। एवकारव्यवच्छेद्यमाह। नानुभवत्वमिति। तथात्वे। प्रतिबध्यतावच्छेदकत्वे। तथात्वं। प्रतिबध्यतावच्छेदकत्वं। दीधितौ-तथेति। विशेषदर्शनं विरोधीत्यर्थः। तथात्वे। प्रतिबध्यतावच्छेदकत्वे। निश्चिताऽव्यभिचारकत्वाद्दोषविशेषाद्यजन्यप्रत्यक्षत्वमेव विशेषदर्शनस्य प्रतिबध्यतावच्छेदकं न तु दोषविशेषाद्यजन्यज्ञानत्वमित्याशंकते। नन्विति। शाब्दादीत्यादिनेति। पर्वतादौ वन्ह्यभावव्याप्यवत्तानिश्चयोत्तरं वन्हिमत्पर्वतत्वावच्छिन्ने वन्हिमत्पर्वतपदवाच्यत्वोपमितेरनुत्पत्या तस्या अपि विरोधिपरामर्शप्रतिबध्यत्वात्। तथा च। लाघवादिज्ञानशून्यस्यैव व्यभिचारसंशयस्य कारणताधीविरोधित्वे च। तथात्वे। प्रतिबध्यतावच्छेदकत्वे। लाघवादिति। तादृशप्रत्यक्षत्वेन प्रतिबध्यत्वे शाब्दोपमित्यादौ प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनागौरवप्रसंगादितिभावः। तदेवाह। शाब्दादिस्थले इत्यादिना उत्तेजकत्वमावश्यकमिति। तथा च तद्वत्ताबुद्धिं प्रति तद्व्याप्यवत्ताज्ञानविरहविशिष्टस्य तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वमावश्यकमिति भावः। अन्यथा। तद्व्याप्यवत्ताज्ञानस्यानुत्तेजकत्वे। उत्पादाऽसंभवादिति। प्रतिबन्धकसत्वादिति भावः। तदानीं। कोटिद्वयव्याप्यवत्तानिश्चयकाले। इति। उत्तजेकत्वावश्यकत्वात्। दीधितौ-विशेषान्तरदर्शनविरहविशिष्टमेवेति। तद्व्याप्यवत्ताज्ञानाभावविशिष्टमेवेत्यर्थः। तत्। विशेषदर्शनं। तथा। प्रतिबन्धकं। अन्यथा। विशेषान्तरदर्शनस्यानुत्तेजकत्वे। संशय

अथ विशेषान्तरदर्शनविरहविशिष्टमेव तत्तथा अन्यथा कोटिद्वयविशेषदर्शने संशयो न स्यादिति चेत् ।

भवत्येव तावद्यावदप्रामाण्यं न गृह्यते, अगृहीताप्रामाण्यकस्यैव विशेषदर्शनस्य विरोधित्वादिति ।

ननु तद्व्याप्यवत्ताज्ञानस्य तदभावव्याप्यवत्ताज्ञाने उत्तेजकत्वमावश्यकम्, अन्यथा कोटिद्वयव्याप्यदर्शनदशायां प्रत्यक्षात्मकस्यापि संशयस्योत्पादासम्भवात् तदानीं संशयानुभवापलापप्रसङ्गादिति सत्प्रतिपक्षसंवलनदशायां उत्तेजकसत्त्वेन संशयानुमितिर्निष्प्रत्यूहेवेत्याशङ्कते अथेति । यावदप्रामाण्यं न गृह्यत इति । तथा चानयोरेकतरमितिरीत्या सामान्यतस्तत्राप्रामाण्यग्रहे विशिष्योभयत्रैवाप्रामाण्यसंशयेन प्रत्यक्षसंशयो भवतीति भावः । एतदुपपादकमेवाह अगृहीताप्रामाण्यकस्यैवेति । अप्रामाण्यसंशयादनुमितिः संशयरूपा न सम्भवति अगृहीताप्रामाण्यकपरामर्शरूपक्लृप्तकारणविरहात् कारणान्तरस्य कल्पकाभावात् ।

इति । प्रत्यक्षेत्यादिः । तथा च प्रत्यक्षसंशयानुरोधेन तस्योत्तेजकत्वमावश्यकमिति भावः । परामर्शद्वयेऽप्रामाण्यग्रहं विना न संशयः कुतस्तस्योत्तेजकत्वमित्याशयेनाह न भवत्येवेति । यावदप्रामाण्यं न गृह्यते । इति । परामर्शयोरप्रामाण्यं यावन्न गृह्यते इत्यर्थः । तथा चेति । विशेषान्तरदर्शनस्यानुत्तेजकत्वे चेत्यर्थः । अनयोरेकतरमिति रीत्या । अनयोरेकतरं बाध्यं विरुद्धार्थग्राहकत्वादिति रीत्या । सामान्यतः । हेतुप्रतिहेतुपरामर्शान्यतरत्वेन । विशिष्य । तत्तत्परामर्शत्वेन । तथा च हेतुप्रतिहेतुपरामर्शान्यतरत्वावच्छिन्ने प्रथमतोऽप्रामाण्यग्रहः ततस्तथाविधान्यतरत्वरूपसमान-[illegible]दर्शनाद् विशिष्य हेतुपरामर्शादौ भ्रमत्वसंशय इत्यर्थः । ननु अप्रामाण्य-[illegible]ऽपि विरोधिपरामर्शसत्वात्कुतः संशय इत्यतआह । एतदुपपादक-[illegible] । संशयोपपादकमित्यर्थः । दीधितौ-अगृहीताऽप्रामाण्यकस्यैवेति । [illegible]प्रामाण्यज्ञानानास्कन्दितस्यैवेत्यर्थः । एवकारेण गृहीताप्रामाण्यकस्य व्यावृत्तिः । स्वकारणेति । अनुमितिकारणेत्यर्थः । प्रत्यक्षसंशयवदिति व्यतिरेकदृष्टान्तः । असंभवादिति । प्रतिबन्धकाभावविरहादिति भावः । तादृशप्रतिबन्धकत्वाऽकल्पने । तत्कोटयवधारणे तद्विरोधिकोटयवधारण। जनकविशेषदर्शनस्य प्रतिबन्धकत्वाकल्पने । तत्र । उभयकोटिव्याप्यदर्शनदशायां । तादृशप्रतिबन्धकेति । कोटिद्वयप्रतिबन्धकेत्यर्थः । एकविशेषदर्शनस्य । तदभावव्याप्यवत्तानिश्चयस्य । अपरविशेषदर्शनेन

मिश्रास्तु तद्व्याप्यदर्शनस्य तदभावव्याप्यदर्शनप्रतिबन्धकताया-मुत्तेजकत्वेपि प्रत्यक्षसंशयवत् उभयव्याप्यतादर्शनान्न संशया-नुमितिरुत्पद्यते यतो व्याप्यदर्शनमवधारणात्मकज्ञान एव हेतुः, अवधारणत्वं चानुमितौ व्याप्यदर्शनजन्यप्रत्यक्षे च स्वीक्रियते, अवधारणद्वयसामग्रीसमाजाच्च न संशयः अवधारणस्य संशय-व्यावृत्तत्वात् तत्कोट्यवधारणे तद्विरोधिकोट्यवधारण जनकविशेषदर्शनस्य प्रतिबन्धकतया विरोधिकोटिद्वयावधारण सामग्रीसंवलनस्यासम्भवात् तादृशप्रतिबध्यप्रतिबन्धकत्वाऽ कल्पने उभयकोटिव्याप्यदर्शनकाले उभयकोट्यवधारणापत्तेः। न चेष्टापत्तिः, तत्र संशयस्यैवोत्पत्त्याऽवधारयामीत्यननुभवात्कोटिद्वयवि-शेषदर्शनकाले च एकविशेषदर्शनस्यापरविशेषदर्शनेनाप्रयोजकीकृत-त्वाद्विशेषादर्शनदशायां विशेषणज्ञानादिघटितय[illegible]ासामग्रीसमाजात्प्र-त्यक्षसंशयः तादृशस्य तस्य तत्राप्यक्षतत्वात् भवति संशयात्मकं प्रत्य-क्षम्, अनुमितिस्थले चावधारणसामग्र्यतिरिक्तसामग्री न कल्प्यते प्रयोजनाभावादिति न संशयानुमितिवार्तेत्याहुः।

तेषां चायमाशयः। अवधारणत्वं न निर्णयत्वं विपरीतकोटयनु-पस्थितिकालीनविशेषदर्शनानधीननिश्चयानन्तरमवधारयामीति प्रती-त्यनुदयात्, किन्तूत्कटनिश्चयत्वम्, औत्कट्यं च विषयताविशेष एव अन्यस्य दुर्वचत्वात्, स एव प्रत्यक्षानुमितिसाधारणो व्याप्यदर्शनप्रति-बध्यतावच्छेदकश्चेति। अत्र च निश्चिनोमि अवधारयामीति प्रतीत्योः समानविषयतया निश्चयत्वमेवावधारणत्वम्, अनभ्यासदशापन्नज्ञाना-द्विशेषदर्शनकालीनज्ञाने अप्रामाण्यशंकानास्कन्दितमेव विशेषः, निश्चय-त्वस्य च अर्थसमाजग्रस्तता व्यवस्थापिता इति नात्र दीधितिकृतो निर्भरः।

इदं त्ववधेयम्। विरोधिज्ञानदशायामाहार्यज्ञानोपपत्तये यदि निरुक्तमनाहार्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेश्यते तदा तस्याव्यव-हितोत्तरत्वघटिततया ऽव्यवहितोत्तरत्वस्य चानुगतस्य दुर्वचतयाऽ-

तद्व्याप्यवत्तानिश्चयेन। तादृशस्य। विशेषणज्ञानादिघटितसामग्रीसमाजस्य। तत्रापि। कोटिद्वयविशेषदर्शनकालेपि। तेषां। मिश्राणां। स एव। विषयताविशेष एव। स्वमतमाह। इदंत्ववधेयमिति। विरोधिज्ञान-दशायां। वन्ह्यभावव्याप्यवत्ताज्ञानदशायां। आहार्यज्ञानोपपत्तये। निर्वन्हिः पर्वतोवन्हिमानिति ज्ञानोपपत्तये। निरुक्तं। स्वविषयत्व-स्वाव्यव-हितोत्तरत्वोभयसंबन्धेन इच्छाविशिष्टप्रत्यक्षान्यत्वं। निवेश्यते इति।

च्छान्यक्तिसमसंख्यभेदानां निवेशनीयतया महागौरवम्, इच्छायाःआहार्यज्ञानसामग्रीघटकतानिर्वाहाय तस्याः तद्धेतुताधिक्यं चेति इच्छाया उत्तेजकत्वपक्ष एव समुचितः। तथा च न प्रत्यक्षशाब्दादिसाधारणबुद्धौ प्रतिबन्धकतैक्यसम्भवः विरोधिज्ञानदशायां चाक्षुषत्वादिप्रकारकेच्छाबलात् स्पार्शनाद्यनुत्पत्त्या च तज्जातीयप्रत्यक्षेच्छानां विशिष्योत्तेजकतां स्वीकृत्य तत्तज्जातीयप्रत्यक्षे पृथक्-पृथक् प्रतिबन्धकताया आवश्यकत्वात्तथा चानुमितिस्थले पृथक् प्रतिबन्धकताया अप्रमाणिकत्वात्संशयानुमितिर्दुर्वारैव। यदि कथञ्चिदव्यवहितोत्तरत्वमनुगतं शक्यते निर्वक्तुं चाक्षुषस्पार्शनादिभेदेन प्रत्यक्षस्थले चाक्षुषादिगोचरेच्छाविरहविशिष्टविरोधिनिश्चयाभावत्वरूपगुरुधर्मावच्छेदेन कारणताषट्कस्य शाब्दोपमित्योः इच्छाविरहाविशेषितविरोधिनिश्चयाभावकारणताद्वयस्य च कल्पनापेक्षया तद्भेदेन चाक्षुषेच्छात्वादिरूपलघुधर्मपुरस्कारेण कारणतापट्कस्य इच्छाविशिष्टान्यबुद्धिसामान्ये विरोधिनिश्चयाभावस्यैकहेतुतायाश्च कल्पने लाघवमीक्ष्यते।

तादृशप्रत्यक्षान्यतद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वं बोध्यम्। तस्य। अनाहार्यत्वस्य। दुर्वचतयेति। स्वत्वघटितत्वेनेति भावः। स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वम् अव्यवहितोत्तरत्वम्। इच्छान्यक्तिसमसंख्यभदानां। तत्तदिच्छाविशिष्टप्रत्यक्षभेदानां। तस्याः। इच्छायाः। तद्धेतुताधिक्यंचेति। आहार्यज्ञानहेतुताधिक्यंचेत्यर्थः। आहार्यत्वं च बाधकालीनेच्छाजन्यत्वम्, अव्यवहितोत्तरत्वसंबन्धेन इच्छाविशिष्टज्ञानत्वंवा। अन्यथा विरोधिनिश्चयकाले इच्छामन्तरेणाऽऽहार्यज्ञानापत्तेरिति ध्येयम्। उत्तेजकत्वपक्षएवेति। एवकारेणाऽऽनाहार्यत्वस्य प्रतिवध्यतावच्छेदककोटौ निवेशव्यावृत्तिः। तथा च। उत्तेजकत्वे च। तज्जातीयेति। चाक्षुषत्वादीत्यर्थः। विशिष्य। चाक्षुषत्व-स्पार्शनत्वादिप्रकारकेच्छात्वेन। आवश्यकत्वादिति। तथा च तत्प्रकारकचाक्षुषत्वावच्छिन्नं प्रति तत्प्रकारकचाक्षुषेच्छाविरहविशिष्टतदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वमिति भावः। एवं स्पार्शनादावप्यूह्यम्। तथा च। आवश्यकत्वे च। संशयानुमितिवारणमुत्थापयति। यदीति। जीवनयोनियत्नस्त्वप्रामाणिक एवेत्यत उक्तं। कथंचिदिति। अनुगतमिति। स्ववृत्तिप्रागभावप्रतियोगित्व-स्ववृत्तिमत्व-स्वविषयत्व-स्वसामानाधिकरण्यैतच्चतुष्टयसंबन्धेन इच्छाविशिष्टत्वमनुगताव्यवहितोत्तरत्वम्। स्वत्वं

तदाऽव्यवहितोत्तरत्वसम्बधेन विरोधिनिश्चयानवच्छिन्नत्वमेव तत्प्रतिबध्यतावच्छेदकमङ्गीक्रियताम्, तथा सति दोषविशेषाजन्यत्वादेरप्यनिवेशनीयतया लाघवात्, तथा चोभयव्याप्यवत्तानिश्चयदशायां संशयानुमितेरुपगमेपि तादृशप्रतिबन्धकाभावव्यभिचारानवकाशाद्विरोधिपरामर्शाभावाघटिताया एवानुमितिसामग्र्या अनुमित्युत्पादप्रयोजकत्वोपगमात्संशयानुमितिर्निष्प्रत्यूहैवेति ।

एतेन वन्ह्यभावव्याप्यवान्पर्वत इत्याकारकाश्रयासिद्ध्यादिनिश्चयदशायां वह्निमान्पर्वतो घटवानित्याद्यनुमितिवारणाय वह्न्यादिप्रकारकानुमितावपि तदभावव्याप्यवत्ताबुद्धेः प्रतिबन्धकत्वमावश्यकमिति न संशयानुमितिप्रसङ्ग इति निरस्तम् । तदभावव्याप्यवत्तानिश्चयानवच्छिन्नबुद्धिप्रतिबन्धकत्वे फलानुरोधेन तद्विशिष्टपक्षकाद्यनुमितिसामग्र्यां तदभावव्याप्यवत्तानिश्चयाभावान्तर्भावेपि प्रयोजनविरहेण तद्विधेयकानुमितिसामग्र्या तदन्तर्भावानुपगमात् ।

परिचायकम् । तद्बुद्देन । चाक्षुपस्पार्शनादिभेदेन । कारणतापट्कस्य । तथा च तत्प्रकारकचाक्षुषत्वावच्छिन्नं प्रति चाक्षुपेच्छाकारणमित्यादिरीत्या कारणतापट्कस्य । एकहेतुतायाश्चकल्पने इति । इच्छाविशिष्टान्यबुद्धि प्रति विरोधिनिश्चयाभावस्य कारणत्वकल्पने इत्यर्थः । तत्प्रतिबध्यतावच्छेदकमिति । विरोधिनिश्चयप्रतिबध्यतावच्छेदकमित्यर्थः । तथा चाव्यवहितोत्तरत्वसंबधेन विरोधिनिश्चयविशिष्टान्यतद्वत्ताबुद्धि प्रति तद्विरोधिनिश्चयः प्रतिबन्धकः इति भावः । तथा सति । विरोधिनिश्चयविशिष्टान्यत्वस्य प्रतिबध्यतावच्छेदकत्वे सति । तथा च । विरोधिविशिष्टान्यत्वस्य प्रतिबध्यतावच्छेदकत्वे च । व्यभिचारशंकानवकाशादिति । प्रकृतानुमितौ विरोधिनिश्चयविशिष्टान्यत्वविरहेण प्रतिबध्यतावच्छेदकानाक्रान्तत्वादिति भावः । विरोधिपरामर्शाभाव घटिताया एवेति । एवकारेण विरोधिपरामर्शाभावघटिताया व्यावृत्तिः । उभयपरामर्शसत्वेन तादृशानुमितौ विरोधिनिश्चयविशिष्टान्यत्वविरहेणैवाप्रतिबध्यत्वादिति भावः । एतेन । विरोधिनिश्चयविशिष्टान्यतद्विधेयकानुमितेरेव प्रतिबध्यत्वेन । वन्ह्यादिप्रकारकानुमितावपीति । अपिना वन्ह्यादिविधेयकानुमितेः समुच्चयः । अवच्छेदकत्वं प्रतिबध्यतावच्छेदकत्वं । तत्र च । प्रत्यक्षान्यत्वज्ञानत्वयोश्च । विनिगमनाविरह इति । तथा च गुरुधर्मावच्छिन्नं प्रति प्रतिबध्यताद्वयमपेक्ष्योपमितित्वादिलघुधर्मावच्छिन्नं प्रति प्रतिबन्धकताद्वयमेव वाच्यमिति संशयानुमितिदुर्वारैवेति भावः । तन्मात्रेण । प्रत्यक्षान्यत्ववैशिष्ट्यमात्रेण । मात्रपदाद्ज्ञानत्वत्वव्यवच्छेदः । इतरेति गुणत्वादीत्यर्थः । व्यावृत्त्यसंभवादिति ।

अत्राहुः—अस्तु प्रत्यक्षस्थले विरोधिज्ञानप्रतिबन्धकतायामिच्छानामुत्तेजकतैव, तथापि परोक्षशाब्दादिबोधस्थले प्रत्यक्षान्यत्वसहितस्य ज्ञानत्वस्य प्रतिबध्यतावच्छेदकत्वमङ्गीक्रियते न तु शाब्दत्वादिनानाधर्माणामिति न संशयानुमितित्वप्रसङ्गः। न च प्रत्यक्षान्यत्वज्ञानत्वयोरेकविशिष्टापरस्यैवानतिप्रसक्तस्यावच्छेदकत्वमंगीकार्यं तत्र च विशेष्यविशेषणभावे विनिगमनाविरह इति वाच्यम्। प्रत्यक्षान्यत्ववैशिष्ट्यस्य गुणत्वादिसाधारणतया तन्मात्रेण ज्ञानत्वस्य निवेशे इतरव्यावृत्त्यसम्भवाज्ज्ञानत्वस्य विशेष्यत्वे विशेष्यतावच्छेदकतया ज्ञानत्वत्वस्य विनिवेशनीयतया गौरवेण स्वतो व्यावृत्तज्ञानत्वविशिष्टप्रत्यक्षान्यत्वस्यैवावच्छेदकत्वादिति।

अन्ये तु महानसीयत्वविशिष्टतया वह्नित्वाद्यनुपस्थितिदशायामपि प्रतीयमानस्य महानसीयवन्ह्यभावादेः प्रतियोगितायां यथा धर्मिविशेषणतापन्नेषु महानसीयत्ववह्नित्वादिनानाधर्मेषु मिथो विशेष्यविशेषणभावानापन्नेषु वाऽवच्छेदकत्वं, प्रत्येकं तादृशधर्माणामतिप्रसक्तत्वेपि यत्रैकस्मिन्नवच्छेद्ये नानाधर्माणामच्छेदकता तत्रावच्छेदकसमुदायस्यानतिप्रसक्तस्यैवावच्छेदकतानिर्वाहः। अवच्छेदकस्य विशेषणसम्बन्धादिभेदेनावच्छेदकतायाश्च भेदेपि नावच्छेद्यभेदः अवच्छेद्यप्रतीतौ अवच्छेदकप्रकारकविषयताभेदेनैव तद्भेदात्, महानसीयवह्निर्नास्तीतिप्रतीतौ च नानाधर्मप्रकारकसमूहालम्बनव्यावृत्तवह्न्यादिविषयतायाः ऐक्यात्तथाप्रकृतेपि धर्मिविशेषणतापन्नमिथोविशेष्यविशेषणभावानापन्नप्रत्यक्षान्यत्वज्ञानत्वयोः प्रतिबध्यतावच्छेदकत्वादिकमतो न विनिगमनाविरहात्प्रतिबध्यतादिभेद इत्याहुः।

तथा च ज्ञानत्वाऽप्रवेशे प्रत्यक्षान्यत्वविशिष्टगुणत्वादेः संस्कारेच्छादावसत्वादिच्छादेः प्रतिबन्धकत्वप्रसंगो बोध्यः। स्वतोव्यावृत्तेति। ज्ञानवृत्तीत्यर्थः। अत्र समवायघटितसामानाधिकरण्यसंबन्धेन ज्ञानत्ववैशिष्ट्यस्य निवेशनीयतया तेन ज्ञानत्वस्य स्वरूपतोभानाभ्युपगमान्न गौरवमिति भावः। ज्ञानवृत्तिप्रत्यक्षान्यत्वस्यैवेति तदर्थः। एवकारेण प्रत्यक्षान्यत्वविशिष्टज्ञानत्वस्य व्यवच्छेदः तथा च न विनिगमनाविरह इति भावः। अवच्छेदकत्वादिति। प्रतिबध्यतावच्छेदकत्वादित्यर्थः। धर्मिविशेषणतापन्नेषु। महानसीयवन्हिविशेषणतापन्नेषु। तादृशधर्माणां। महानसीयत्व-वन्हित्वादीनां। अवच्छेद्ये। प्रतियोगितायां। अवच्छेदकस्य। महानसीयत्वस्य-वन्हित्वस्य अस्यभेदेपीत्यनेनाऽन्वयः। विशेषणभेदेन। महानसीयत्वत्व-वन्हित्वत्वभेदेन। संबन्धभेदेन। स्वरूपसमवायसंबन्धभेदेन। अवच्छेद्यप्रतीतौ। अवच्छेद्यघटितसं-

तन्न। प्रत्यक्षान्यत्वसहितज्ञानत्वेन धर्मिणो युगपदुद्भावने एकतरस्यापरधर्मितावच्छेदकत्वभानमावश्यकं समूहालम्बनविलक्षणनिर्धर्मितावच्छेदककोभयभानस्याप्रामाणिकत्वादिति प्रत्यक्षान्यत्वधर्मितावच्छेदकतापन्नज्ञानत्वप्रकारिकाया ज्ञानत्वधर्मिकावच्छेदकतापन्नप्रत्यक्षान्यत्वप्रकारिकायाश्च धर्मिविषयतायाः भेदेन प्रतिवध्यताभेदस्यावश्यकत्वात्।

केचितु वह्नित्वाभावत्वाभ्यां व्यापकताग्रहकाले महानसीयवह्नित्वतादृशवन्ह्यभावत्वप्रकारेणानुमितिप्रयोजकलाघवज्ञानवशाद्यत्र सत्प्रतिपक्षभावः तत्र संशयानुमितिः न तदभावव्याप्यवत्ताबुद्धिविरोधित्वेन शक्यते वारयितुं शुद्धवह्नित्वावच्छिन्नशुद्धाभावत्वावच्छिन्नव्याप्यधियोर्महानसीयवन्ह्यभावमहानसीयवह्निविशिष्टबुद्ध्यविरोधित्वात्।

सर्गकप्रतीतौ। स्वावच्छेद्यप्रतियोगितासंसर्गकप्रतियोगिविशेष्यकप्रतीतौ इति यावत्। अवच्छेदकप्रकारताकेत्यादि। अवच्छेदकनिष्ठप्रकारतानिरूपित विशेष्यताभेदेनैवेत्यर्थः। एवकारेणाऽवच्छेदकभेदव्यावृत्तिः। तद्भेदादिति। अवच्छेद्यप्रतीतौअवच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यताभेदेनैवाऽवच्छेद्यभेद इति नियमादिति भावः। समूहालंबनव्यावृत्तेति। महानसीयोनास्ति-वह्निर्नास्ति इति समूहालंबनव्यावृत्तेत्यर्थः। विरोधिज्ञानवत् विरोधिज्ञानसामग्र्या तद्वत्ताज्ञानमात्रं प्रति प्रतिवन्धकत्वे लौकिकसन्निकर्षजन्यः प्रत्यक्षात्मक संशयोपि न स्यादिति लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञाने एव विरोधिज्ञानसामग्र्याः प्रतिवन्धकत्वं कल्पनीयम्। तथा च सत्प्रतिपक्षसंवलनदशायां न संशयानुमितिः संभवति साध्याभावव्याप्यवत्वपरामर्शात्मिकायाः विरोधिज्ञानसामग्र्याः सत्वात् संशयानुमितेश्च लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानत्विरूपतया तत्प्रतिवध्यतावच्छेदकाक्रान्तत्वादिति चिन्तामणिकारमतं रत्नकोषकृन्मतानुयायिनोऽधिक्षिपन्ति। केचित्त्विति। वन्हित्वाऽभावत्वाभ्यामिति। वन्हित्वेन-अभावत्वेन चेत्यर्थः। व्यापकताग्रहकाले इति। वन्हिव्याप्यवान्पर्वत इति परामर्शकाले-अभावव्याप्यवानिति परामर्शकाले इत्यर्थः। लाघवज्ञानवशादिति। अनुमितेर्महानसीयवन्हिविषयकत्वे-महानसीयवन्ह्यभावविषयकत्वे च लाघवमिति लाघवज्ञानवशादित्यर्थः। संशयानुमितिः। महानसीयवन्हिमान्नवेत्यनुमितिः। शुद्धवन्हित्वावच्छिन्नेति। वन्हिव्याप्यवानितिधियः-अभावव्याप्यवानितिधियश्चेत्यर्थः। महानसीयवन्ह्यभाव-महानसीयवन्हिविशिष्टबुद्ध्यविरोधित्वादिति। अयमाशयः। साध्यव्याप्यवत्तानिश्चयरूपविरोधिज्ञानान्न सर्वत्र संशयाकारानुमितिर्वारयितुं शक्या तथाहि-वन्हिव्याप्यधूमवानयम्, अभावव्याप्यजलवानयं इति परामर्शद्वयकाले अनुमितेर्महानसीयवन्हिविषयकत्वे-

न च लाघवज्ञानघटिततद्विरोध्यनुमितिसामग्रीकाले तत्प्रत्यक्षशाब्दादिवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्वे कल्पनीये अनुमितिसाधारणस्य तद्विशिष्टजिज्ञासानवच्छिन्नतद्विशिष्टधीत्वस्यैव प्रतिबध्यतावच्छेदकत्वोपगमान्न संशयानुमितिप्रसङ्ग इति वाच्यम् ।

महानसीयवन्ह्यभावविषयकत्वे च लाघवमितिज्ञानसत्वे-महानसीयवन्हिमान्नवेति संशयानुमितिर्जायते-वन्हिव्याप्यधूमवानयमिति विरोधिपरामर्शघटिता सामग्री वन्ह्यभावानुमितिं प्रत्येव प्रतिबन्धिका, न तु महानसीयवन्ह्यभावानुमितिं प्रति, एवं अभावव्याप्यवानयमितिपरामर्शघटिता सामग्री अपि न महानसीयवन्ह्यनुमितिं प्रतिबध्नाति । तथा च संशयानुमितिः सर्वथा न निराकर्तुं शक्यते इति भावः । सिद्धान्ती संशयानुमितिप्रसंगं निराकरोति । न चेति । लाघवज्ञानघटितेति । महानसीयवन्ह्यभावानुमितिविषयकत्वे लाघवमितिलाघवज्ञानघटितेत्यर्थः । तद्विरोधीति । महानसीयवन्हिविरोधीत्यर्थः । महानसीयवन्ह्यभावानुमितिसामग्रीकाले इति यावत् । तत्प्रत्यक्षशाब्दादिवारणायेति । महानसीयवन्हिविषयकप्रत्यक्षशाब्दादिवारणायेत्यर्थः । तत्र । प्रत्यक्षशाब्दादौ । तादृशसामग्र्याः । लाघवज्ञानघटिततद्विरोधिसामग्र्याः । तद्विशिष्टधीत्वस्यैवेति । महानसीयवन्हिविषयकबुद्धित्वस्यैवेत्यर्थः । एवकारेण प्रत्यक्षत्वशाब्दत्वे व्यावर्तनीये । नानाप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवादिति भावः । ननु महानसीयवन्ह्यभावानुमितेः लाघवज्ञानघटितोक्तसामग्रीसंवलनकाले महानसीयवन्हिविषयकप्रत्यक्षं जायतां-शाब्दज्ञानं मे जायतां इतीच्छासत्वे प्रत्यक्षादिसामग्रीसत्वे महानसीयवन्हिविषयकप्रत्यक्षाद्यनुत्पत्तिरत आह । तद्विशिष्टजिज्ञासानवच्छिन्नेति । अव्यवहितोत्तरत्वसंबन्धेन तद्विषयकजिज्ञासाविशिष्टान्येत्यर्थः । तच्च धियोविशेषणम् । उक्तप्रत्यक्षस्य जिज्ञासाविशिष्टत्वाद्वारणम् । न संशयानुमितिप्रसंग इति । उक्तसामान्यप्रतिबध्यप्रतिबन्धकभावकल्पनात्तस्या अपि प्रतिबध्यतावच्छेदकाक्रान्तत्वादिति भावः । न च तथापि उभयत्रेच्छासहितलाघवज्ञानघटितसामग्रीसत्वे संशयानुमितिवारणासंभव इति वाच्यम् । तादृशेच्छायाः प्रतिबध्यतावच्छेदककोटावनिवेशात् । अथ लाघवज्ञानघटितमहानसीयवन्ह्यनुमितिसामग्रीदशायां इच्छाघटितमहानसीयवन्ह्यभावप्रत्यक्षसामग्रीसत्वे महानसीयवन्ह्यभावप्रत्यक्षमेव जायते अतस्तादृशेच्छाविरहस्य प्रतिबध्यविशेषणत्वावश्यकतया ( प्रत्यक्षेच्छाविरहविशिष्टभिन्नविषयकप्रत्यक्षं प्रति भिन्नविषयकानुमितिसामग्री प्रतिबन्धिका ) तदानीं च महानसीयवन्ह्यभावव्याप्यवत्तापरामर्शान्महानसीयवन्ह्यभावानुमित्यापत्तिरितिचेन्न । अनुमितिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वादेवानुमित्यनुदयात् । शाब्दसामग्र्यसत्वे शाब्देच्छामात्रसत्वे तु

लाघवज्ञानाऽघटितशुद्धाऽभावत्वादिप्रकारकानुमितिसामग्र्याः व्यापिकायाः प्रतिबन्धकतयैवोपपत्तेः, प्रत्यक्षादौ लाघवादिज्ञानमन्तर्भाव्य सामग्रीप्रतिबन्धकत्वान्तरस्यैवासिद्धेः, तथा चोक्तानुमितिवारणाऽसंभवः, तत्प्रतिबध्यतावच्छेदककोटौ महानसीयवह्नित्वावच्छिन्नविषयकानुमित्यन्यतादृशज्ञानत्वस्यैव निवेशनीयत्वात्।

तच्छाब्देच्छाव्यक्तेरभावस्य प्रतिबध्येऽविशेषणत्वात्। अनुगतरूपावच्छिन्नेच्छाविरहस्य प्रतिबध्यतावच्छेदककोटावनिवेशात्।

ननु लाघवज्ञानघटितमहानसीयवन्ह्यभावानुमितिसामग्रीदशायां घटादेःप्रत्यक्षशाब्दवारणाय घटादिप्रत्यक्षादिकं प्रति तादृशसामग्र्याः प्रतिबन्धकत्वं वाच्यं, प्रतिबध्यतावच्छेदकं च घटादिजिज्ञासानवच्छिन्नघटादिविषयकानुमित्यन्यज्ञानत्वं वाच्यं, घटादिविषयकपरामर्शसत्त्वे समूहालंबनानुमित्युत्पादस्य सर्वसम्मतत्वात्। तथा च महानसीयवन्ह्यविषयकानुमित्यन्यज्ञानत्वस्यैवानुगतरूपस्य घटादिप्रत्यक्षसाधारणस्य प्रतिबध्यतावच्छेदकत्वौचित्येन संशयानुमितिर्न वारयितुं शक्यते इति चेन्न। लाघवज्ञानघटितमहानसीयवन्ह्यनुमितिसामग्रीकाले शाब्देच्छाघटितघटशाब्दसामग्री इच्छाद्यघटितमहानसीयवन्ह्यभावशाब्दसामग्री यत्र वर्तते तत्र घटशाब्दसंपत्यर्थं शाब्देच्छाविरहस्य प्रतिबध्यविशेषणत्वेन महानसीयवन्ह्यभावशाब्दं प्रति प्रतिबन्धकत्वात्, उक्तानुगतस्यैव प्रतिबन्धकतावच्छेदकत्वस्यावश्यकत्वात्।

यथा व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्री अपेक्षिता तथैव व्याप्यधर्मावच्छिन्ने कार्ये व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्री प्रतिबन्धिका। एवं च अभावव्याप्यजलवान् ह्रदः इति अभावत्वव्यापकताघटितसामग्रीकाले न महानसीयवन्हिविषयकप्रत्यक्षसंभवः, लाघवज्ञानादिघटितसामग्रीव्यापिकायाः शुद्धाभावघटितपरामर्शघटितायाः सामग्र्या एव प्रतिरोधात्। तथा च महानसीयवन्हिविषयकप्रत्यक्षशाब्दादिवारणाय तद्विषयकजिज्ञासाविशिष्टान्यतद्विषयकबुद्धिमात्रं प्रति लाघवज्ञानघटिततद्विरोधिअनुमितिसामग्र्याः पृथक् प्रतिबन्धकत्वं न कल्प्यते येन संशयानुमितिर्न स्यादित्याह। **लाघवज्ञानाघटितेति।** अनुमितेर्महानसीयवन्हिविषयकत्वे महानसीयवन्ह्यभावविषयकत्वे लाघवमितिलाघवज्ञानाघटितेत्यर्थः। **शुद्धाभावत्वादिप्रकारकेति।** आदिना शुद्धवन्हित्वप्रकारकसंग्रहः। **अनुमितिसामग्र्याः।** अभावव्याप्यवान् वन्हिव्याप्यवानितिपरामर्शद्वयस्य। **प्रतिबन्धकतयैवोपपत्तेरिति।** व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्रीप्रतिबन्धकतयैवोपपत्तेरित्यर्थः। एवकारव्यवच्छेद्यमाह। **प्रत्यक्षादौ।** तद्विषयकप्रत्यक्षादौ।

यदि च लाघवज्ञानजन्यमहानसीयवन्ह्यभावादिप्रकारकानुमितौ महानसीयवन्ह्यभावत्वादिकमपि विधेयतावच्छेदकम्, तथा च शुद्धाभावादिप्रकारकसिद्धिदशायां शुद्धाभावत्वावच्छिन्नविधेयकानुमितिसामग्र्या असत्वात्तदानीमेव लाघवादिज्ञानसत्वे प्रत्यक्षादिवारणाय लाघवज्ञानघटितसामग्र्या प्रतिबन्धकत्वान्तरकल्पनमावश्यकमित्युच्यते, तदापि लाघवज्ञानघटितविरोधिकोटिद्वयानुमितिसामग्रीसंवलनदशायां भवन्मते प्रत्यक्षशाब्दबोधाद्युत्पत्त्या एककोटिसामग्र्यामपरकोटिसामग्र्यभावप्रवेशस्यावश्यकतया कथं तत्प्रतिबन्धकतया संशयानुमितिवारणसंभवः।

सामग्रीप्रतिबन्धकत्वान्तरस्यैवेति। अनुमितिसाधारणतद्विषयकजिज्ञासाविशिष्टान्यतद्विषयकबुद्धिं प्रति तद्विरोध्यनुमितिसामग्र्याः प्रतिबन्धकत्वान्तरस्यैवेत्यर्थः। असिद्धिरिति। तद्विषयकप्रत्यक्षे व्यापकसामग्र्या विरोधित्वात्तस्याश्चक्लृप्तत्वादिति भावः। तथा च। व्यापकसामग्र्या एव विरोधित्वे च। उक्तानुमितीति। संशयानुमितीत्यर्थः। असंभवे हेतुमाह। तत्प्रतिबध्यतावच्छेदककोटाविति। उक्तसामग्रीप्रतिबध्यतावच्छेदककोटावित्यर्थः। तादृशज्ञानत्वस्यैवेति। जिज्ञासाविशिष्टान्यमहानसीयवन्हिविषयकानुमित्यन्यतद्विषयकबुद्धित्वस्यैवेत्यर्थः। एवकारेण जिज्ञासाविशिष्टान्यतद्विषयकबुद्धित्वस्य व्यवच्छेदः। तथा च संशयानुमितिर्निष्प्रत्यूहेवेतिभावः।

यद्धर्मे व्यापकतावच्छेदकत्वं गृह्यते, अनुमितौ तद्धर्मे एव विधेयतावच्छेदकत्वं भासते इति न्यायात् लाघवज्ञानसहकृतवन्हिव्याप्यवानिति परामर्शजन्यमहानसीयवन्हिमानित्यनुमितौ वन्हित्वमेव विधेयतावच्छेदकम्, तत्राह। यदि चेति। लाघवज्ञानजन्येति। लाघवज्ञानसहकृताऽभावव्याप्यजलवान्हृद इति परामर्शजन्येत्यर्थः। इदमुपलक्षणम् लाघवज्ञानसहकृतवन्हिव्याप्यधूमवत्तापरामर्शजन्येत्यपि बोध्यम्। महानसीयवन्ह्यभावादीति। आदिना वन्हेः परिग्रहः। महानसीयवन्ह्यभावत्वादिकमपीति। आदिना महानसीयवन्हित्वस्य परिग्रहः। अपिना अभावत्वादेः समुच्चयः। तथा च। महानसीयवन्ह्यभावत्वादेर्विधेयतावच्छेदकत्वे च। शुद्धाऽभावत्वादिप्रकारकसिद्धिदशायामिति। अभाववानितिसिद्धिदशायामित्यर्थः। असत्वादिति। सिद्ध्यभावरूपसामग्र्याविरहादितिभावः। तदानीं। सिद्धिदशायां। प्रत्यक्षादिवारणायेति। महानसीयवन्ह्यादिविषयकप्रत्यक्षशाब्दबोधवारणायेत्यर्थः। शुद्धाऽभावत्वादिनाऽभावप्रकारकसिद्धिकाले शुद्धाभावत्वावच्छिन्नविधेयकानुमितिर्न भवति। तदैवोक्तलाघवज्ञानदशायां महानसीयवन्हिमानित्याद्यनुमितिर्भवति। तदा महानसीयवन्हि-

एतेन विरोधिविषयकनिश्चयानन्तरमिव तत्सामग्र्यनन्तरमपि इच्छाःबलात्परोक्षज्ञानं नोत्पद्यते, एवं च लाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्रीदशायामिच्छासत्त्वेऽपि न शाब्दबोधादिरुत्पद्यते किन्तु विरोधिकोट्यनुमितिरेवेति फलानुरोधेन इच्छाभावं प्रतिबन्धके, इच्छानवच्छिन्नत्वं च प्रतिबध्यविशेषणमनिवेश्य लाघवज्ञानघटितसामग्र्याः परोक्षातद्विशिष्टज्ञाने प्रतिबन्धकत्वान्तरकल्पनमावश्यकमिति तत्प्रतिबध्यतावच्छेदकत्वस्य परोक्षत्वस्याऽनुमितिसाधारण्यान्नोक्तस्थले संशयानुमितिप्रसंग इति निरस्तम्। विरोधिविषयकनिश्चयसामग्रीबलात्परोक्षज्ञानानुत्पादस्याऽप्रामाणिकत्वाच्चेत्याहुः।

अत्राहुः—संशयसमुच्चययोर्विरोधिभानप्रयुक्तवैलक्षण्यस्य दूषित्वा त्संशयत्वस्य विषयताविशेषरूपत्वमावश्यकं, तादृशविषयिता च कोटिनिरूपिता कोट्युपरागेणैव सन्देह्मीति प्रतीतेः तत्कोटिनिरूपितविषयताविशेषभिन्नतत्कोटिविषयताविशेषशालित्वं तत्तत्कोटिनिश्चयत्वम्, तथा च निश्चयत्वघटकविषयिताःसंशयसाधारण्ये तत्रापि निश्चिनोमीतिप्रतीत्यापत्तिरिति तस्यास्तद्व्यावृत्तत्वमावश्यकम्, तन्निर्वाहश्च संशयसामग्र्या तादृशविषयताशालिज्ञानप्रतिबन्धकतयैवेत्युक्तलाघवज्ञानघटितसामग्रीद्वयात्संशयस्वीकर्तॄणामपि निश्चयत्वघटकनिरुक्तविषयिताः तादृशसंशयव्यावृत्त्यर्थं लाघवज्ञान घटितविपरीतकोट्यनुमितिसामग्र्यास्तत्कोटिनिरूपिततादृशविषयताशालिज्ञानप्रतिबन्धकत्वमावश्यकम्, तथा च लाघवात्संशत्वघटकविषयताभेदमनिवेश्यैव तत्कोटिप्रकारित्वस्यैतादृशसामग्रीप्रतिबध्यतावच्छेदकत्वोपगमान्नोक्तसामग्रीद्वयात्संशयानुमितिः। न च संशयत्वघटककोटिप्रकारताभिन्नतत्कोटिप्रकारताकज्ञानत्वं न तत्कोटिनिश्चयत्वम्, अपि तु तादृशप्रकारताशून्यतत्कोटिप्रकारकज्ञानत्वम्, तथा च संशये निश्चयवृत्तिविषयतास्वीकारेपि न क्षतिरिति वाच्यम्। एकधर्मावच्छिन्ने तत्कोटिसंशयरूपस्यान्यधर्मावच्छिन्नांशे तत्कोटिनिश्चयस्य संग्रहाय तत्तद्धर्मावच्छिन्नविशेष्यतानिरूपितविलक्षणविषयिताशून्यत्वस्य तत्तद्धर्मावच्छिन्नविशेष्यकनिश्चयत्वशरीरे नि-

विषयकप्रत्यक्षशाब्दादिवारणायेति भावः। प्रतिबन्धकत्वान्तरमावश्यकमिति। तद्विषयकजिज्ञासाविशिष्टान्यतद्विषयकबुद्धिं प्रति लाघवज्ञानसहिततद्विरोधिसामग्र्याः प्रतिबन्धकत्वान्तरमित्यर्थः। तथा च क्व संशयानुमितिसंभावनापीति भावः।

वेशनीयतया धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या कारणत्वप्रतिबन्धकत्व-पक्षीयलाघवस्य विलयप्रसंगादिति ।

परे तु ग्राह्याभावेऽव्याप्यवृत्तित्वग्रहदशायां ग्राह्याभावनिश्चय-विषये धर्मिणि ग्राह्यज्ञानोत्पत्त्या यथा तादृशाऽव्याप्यवृत्तित्वग्रहस्य तत्प्रतिबन्धकतायामुत्तेजकत्वं, तथा तद्धर्मिकाऽव्याप्यवृत्तित्व-ग्रहदशायां तद्व्याप्यवत्तानिश्चयस्यापि तद्विपरीतज्ञानाप्रतिबन्ध-कतया तत्रापि तद्धर्मिकाऽव्याप्यवृत्तित्वग्रहस्योत्तेजकत्वमुपेयम् । एवं-च कपिसंयोगतदभावयोर्दैशिकाव्याप्यवृत्तित्वग्रहदशायां पक्षतावच्छे-दकशाखादिरूपैकावच्छेदेन तदुभयकोट्यवगाहिनी गन्धतदभावयोः-कालिकाऽव्याप्यवृत्तित्वग्रहदशायां पक्षतावच्छेदकतत्क्षणावच्छेदेन तदुभयकोटिमवगाहमाना च संशयानुमितिः ग्राह्याभावज्ञानप्रतिब-न्धकतया न शक्यते वारयितुम् । नचाऽव्याप्यवृत्तित्वज्ञानस्य संशय-विरोधितया अव्याप्यवृत्तित्वज्ञानकाले समुच्चय एव भवति न संशय इति वाच्यम् । यतो विरोधग्रहएवाऽव्याप्यवृत्तित्वग्रहस्य विरोधितया-कोट्योर्विरोधावगाहिसंशये एव तयोरव्याप्यवृत्तित्वग्रहदशायां न संभवति, विरोधानवगाहिन एकदेशावच्छेदेनैककालावच्छेदेन वा कोटिद्वयमवगाहमानस्य संशयस्य तदानीमुत्पत्तौ बाधकाभावः,

न हि तादृशज्ञानं कोटिद्वयनिश्चयरूपं भवति, समानदेशकाला-वच्छेदेन तत्तदभावनिश्चययोरव्याप्यवृत्तित्वग्रहकालीनयोरपि मिथो-विरोधित्वात् । अव्याप्यवृत्तित्वेपि भावाभावयोरेकदेशावच्छेदेन वृत्तेरसंभवात् । अव्याप्यवृत्तितया तादृशनिश्चययोर्विषयविरोधापरि-हारात् । नच यदि तादृशदेशावच्छेदेन तदभावनिश्चयस्तदवच्छेदेन तद्विशिष्टबुद्धिं ग्राह्याभावधर्मिकाऽव्याप्यवृत्तित्वग्रहदशायामपि प्रति-बध्नाति तदा तादृशाव्याप्यवृत्तित्वग्रहदशायामवच्छेदकावच्छेदेन ग्राह्याभावव्याप्यवत्ताज्ञानमपि तादृशानुमितिं विरुन्ध्यात्, तथा-चाऽवच्छेदकावच्छेदेनानुमितौ अवच्छेदकावच्छेदेन हेतुमत्तापरामर्श-स्यैव हेतुतया तादृशयोश्च परामर्शयोरवच्छेदकावच्छेदेन विपरीत-साध्यवत्ताज्ञाः प्रतिबन्धकतया नोक्तसंशयानुमितिसंभव इति वाच्यम् । अवच्छेदकसामानाधिकरण्येन हेतुमत्ताज्ञानादपि देशकालरूपपक्षता-वच्छेके बाधाभावबलात्स्वरूपसंबन्धरूपावच्छेदकत्वमवगाहमानायां अनुमितौमणिकारैरुपगमात् ।

वस्तुतो ग्राह्याभावस्या,व्याप्यवृत्तित्वेपि तदवच्छेदकावच्छेदेन ग्राह्यवत्वाऽसंभवाद्विषयविरोधेनाऽवच्छेदकावच्छेदेन विशिष्टबुद्धौ

निबन्धे तु हेत्वाभासानां फलद्वारकं लक्षणम् ।

तदवच्छेदेन ग्राह्याभाववत्ताज्ञानप्रतिबन्धकतायामेव तद्धर्मिकाऽव्याप्यवृत्तित्वग्रहाभावो नापेक्षितः । तादृशतद्व्याप्यवत्ताज्ञानस्य तादृशविशिष्टबुद्धिं प्रत्यपि विरोधित्वे तु तादृशाऽव्याप्यवृत्तित्वग्रहाभावोऽपेक्षित एव । ग्राह्याभावस्याऽव्याप्यवृत्तित्वे ग्राह्यावच्छेदकावच्छेदेन ग्राह्याभाववति वर्तमानस्यापि तद्व्याप्यतया विषयविरोधविरहात् ।

साध्यानवच्छेदकावच्छेदेन साध्यवति वर्तमाने यद्देशकालावच्छेदेन यत्रसाधनं तद्देशकालावच्छेदेन तत्र साध्यमिति व्याप्तिर्न संभवतीति चेत्-- का क्षतिः, न हि पक्षतावच्छेदकदेशकालावच्छेदेन साध्यानुमितौ तदवच्छेदेन गृहीततादृशव्याप्तिकहेतुमत्तापरामर्श एव हेतुरित्यवच्छेदकावच्छेदेनानुमितिस्थलेऽसिद्धिव्यभिचाराऽसंकीर्णबाधस्य हेत्वाभासत्वं व्यवस्थापितवतोमणिकारस्यानुमतम्, तथा सति सल्लिङ्गपरामर्शाद् भ्रमानुमित्यसंभवेन बाधे दोषान्तराऽसंकरस्य दुर्घटत्वात् । तथा चाऽवच्छेदकदेशकालघटिता-

मूले-फलद्वारकमिति । फलघटितमित्यर्थः । फलं चाऽत्र संशयादिकम् । तथा च धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं साध्यसंशयजनककोटिद्वयोपस्थितिजनकताऽनतिरिक्तवृत्ति तद्रूपवत्वं सव्यभिचारत्वम् । संशयफलकदोषत्वं सव्यभिचारत्वमत्रेत्यस्मद्गुरुचरणाः । व्यवस्थितविकल्पोयमिति । तथा च वाकारश्चार्थे इति भावः । साधारणाऽसाधारणभेदेनेति । साध्यतदभाववद्वृत्तित्वं साधारणत्वम्, निश्चितसाध्यतदभाववद्व्यावृत्तत्वमसाधारणत्वमिति मतेनेदम् । अवृत्तेरपीति । वन्हिमान् गगनादित्यत्र गगनस्यापीत्यर्थः । अपिना वृत्तेः परिग्रहः । मूले-साध्यविपरीतज्ञानमिति । अस्य फलमिति पूर्वेणान्वयः । तथा च साध्यविपरीतव्याप्तिविशिष्टयद्रूपविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वं साध्यविपरीतानुमितिजनकतावच्छेदकं तद्रूपवत्वं विरुद्धत्वम् । अथ पर्वतो वन्हिमान् ह्रदत्वादित्यादौ ह्रदत्वादेर्विरुद्धत्वानुपपत्तिः, पर्वते वन्ह्यभावानुमापकत्वाभावादित्यत आह । अपक्षधर्मविरुद्धस्येति । पर्वतावृत्तिह्रदत्वस्येत्यर्थः । प्रकृतपक्षे । पर्वते । साध्यविपरीतानुमापकत्वासंभवेपि वन्ह्यभावाननुमापकत्वेपि । नक्षतिः । नाव्याप्तिः । अव्याप्तिविरहे हेतुमाह । प्रकृतपक्षकत्वाविवक्षणादिति । तथा च साध्यविपरीतानुमापकत्वमेव विरुद्धत्वम् । मूले-अपक्षधर्मोपि । पर्वतावृत्तिरपि । विरुद्धो-ह्रदत्वादिः । स्वाधिकरणे-ह्रदादौ । तत्फलं । न साध्याभावानुमापकत्वम् । इति-वन्ह्यभावानुमा-

अनैकान्तिकानामन्वयाद्व्यतिरेकाद्वा कोट्युपस्थापकतया संशयः फलम्, विरुद्धस्य साध्यविपरीतज्ञानम्। अपक्षधर्मोऽपि विरुद्धोऽन्यत्र विपरीतज्ञानसमर्थ एव। बाधेऽन्यतोऽपि विपरीतज्ञानं, न तु हेत्वभिमतादेव। नित्योघटः कार्यत्वादितिविरुद्धे बाधसंकरेऽप्यदोषः।

विरुद्धस्येति। साध्याभावव्याप्यस्येत्यर्थः। बाधे इति। हेतौ प्रकृतेऽन्यत्र वा।

प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावघटिता व्याप्तिरपि तन्मतेऽवच्छेदकावच्छेदनानुमितिप्रयोजिका। तादृशव्याप्त्यवगाहिनोऽवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्यापि विपरीतकोट्यनुमितिप्रतिबन्धकत्वे ग्राह्याभावधर्मिकाव्याप्यवृत्तित्वज्ञानाभावोऽप्यपेक्षित इत्येवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्य तदवच्छेदेन साध्यानुमितावपेक्षितत्वेऽपि दर्शितरीत्या संशयानुमित्युपपत्तिरित्याहुः।

मूलेऽन्वयाद्व्यतिरेकाद्वेति। कोटिद्वयसहचरितत्वज्ञानान्निश्चितकोटिद्वयव्यावृत्तत्वज्ञानाद्वेत्यर्थः। व्यवस्थितविकल्पोयं साधारणाऽसाधारणभेदेन। विरुद्धस्येत्यत्र साध्यासामानाधिकरण्यरूपविरोधविवक्षणेऽवृत्तेरपिविरोधतया तस्य चाऽपक्षधर्मस्य न साध्यविपरीतानुमितिःफलमित्यसंगतिरतोऽन्यादृशमेव विरोधं दीधितिकृदाह। साध्याभावव्याप्यस्येति।

अपक्षधर्मविरुद्धस्य प्रकृतपक्षे साध्यविपरीतानुमापकत्वाऽसंभवेऽपि न क्षतिः, साध्यविपरीतानुमितौ प्रकृतपक्षकत्वाऽविवक्षणादित्याह— मूले— अपक्षधर्मोऽपीति। अन्यत्र— प्रकृतपक्षभिन्ने स्वाधिकरणे, ह्रदो-वन्हिमान्धूमादित्यादौ ह्रदत्वादिहेतोः पक्षे साध्यविपरीतज्ञानसंभवेऽपि अविरुद्धधूमादेर्न तत्फलमिति नातिप्रसंगः। यस्य तत्फलं स विरुद्ध एवेत्याह। बाध इति। साध्याभावसाधकबाधितहेतोर्लक्ष्यतयोक्तकत्वाभावात्। नातिप्रसंग इति। वन्हिसाध्यकधूमहेतोर्न विरुद्धत्वमितिभावः यस्य-हेतोः। तत्फलं-साध्याभावानुमापकत्वम्। सः-हेतुः। मूले-अन्यतः-अन्यस्माद-ह्रदत्वादिति यावत्। न तु हेत्वभितादेवेति धूमादेवेत्यर्थः। उक्तफलघटितेति। साध्यविपरीतानुमापकत्वघटितेत्यर्थः। निराकरोतीति। इष्टापत्त्या इत्यादिः।

असिद्धेऽ नैकान्तादिचतुष्टयज्ञानान्य(मात्रा)लिंगत्वज्ञानं, बाधे पक्षधर्मेहेतौ व्याप्तिबाधः ।

अपक्षधर्मे च पक्षधर्मताबाध इति शेषो वा । तथा च हेतौ व्याप्तिपक्षधर्मताऽन्यतरभङ्ग इत्यर्थः ।

फलघटितविरुद्धलक्षणातिव्याप्तिशंकां निराकरोति । नित्य इति । घटोऽनित्य इत्यभिधाने अकारप्रश्लेषेणानित्यत्वसाध्यकत्वभ्रमः स्यादिति प्रथमं नित्यत्वसाध्यकत्वोत्कीर्तनम् । असिद्ध इत्यादि । व्यभिचारादिदोषचतुष्टयज्ञानान्यमात्राधीनं- फलतस्तज्ज्ञानानधीनं । अलिंगत्वज्ञानं- असाधकत्वज्ञानं, असिद्धदोषस्य ज्ञातस्य फलमित्यर्थः । तथा च तादृशदोषवत्वमसिद्धहेत्वाभासस्य लक्षणं फलितमिति भावः ।

पक्षधर्मे हेताविस्यत्र हेतुपदस्य प्रकृतहेतुपरत्वेऽपक्षधर्मे व्याप्यप्रकृतहेतुकबाधस्थले व्याप्त्यभावासिद्धरूपतत्फलाऽसंभवात्फलघटितलक्षणाव्याप्तिरतो हेतुपदस्य प्रकृताप्रकृतसाधारणहेतुमात्रपरतां दीधितिकृदाह । हेतौ- प्रकृते अन्यत्र वेति । तथा च ह्रदोवन्हिमान्धूमादित्यादावपि साध्याभाववत्पक्षरूपबाधघटितेन तद्वृत्तित्वहेतुना द्रव्यत्वादिरूपहेत्वन्तरे व्याप्त्यभावानुमितिसंभवाल्लक्षणसमन्वय इति भावः ।

मूले-असिद्धेइति । ह्रदोद्रव्यंधूमादित्यत्र धूमे इत्यर्थः । अनैकान्तिकादीति । आदिना विरोध सत्प्रतिपक्ष बाधपरिग्रहः मूले-अनैकान्तिकादिचतुष्टयज्ञानान्यस्माल्लिगत्वज्ञानमितिपंचमीतत्पुरुषसमासाश्रयणात् तदधीनत्वलाभे यथाश्रुतमेव सम्यक् किंमात्रपदनिवेशेन इति चेन्न । असिद्धसंकीर्णव्यभिचारिणि व्यभिचारज्ञानान्यासाधकत्वरूपविशेषणज्ञानाधीन असाधकत्वज्ञानकासाधकत्वरूपविशेषण सत्वादतिव्याप्तेः । मात्रपदनिवेशे तु तस्य व्यभिचारज्ञानस्याप्यधीनत्वान्नातिव्याप्तिरिति भावः । असाधकत्वज्ञानं न स्वरूपसत् असिद्धेः फलमतो ज्ञातस्येति तद्ज्ञानानधीनं अनैकान्तिकादिचतुष्टयज्ञानानधीनम् । असाधकत्वज्ञानं-अयं हेतुरसाधक इति ज्ञानम् । तथा च-असिद्धहेतोरसाधकत्वज्ञानजनकत्वे । तादृशेति । असाधकत्वज्ञानजनकेत्यर्थः । मूले-व्याप्तिबाधः-व्याप्त्यभावज्ञानम् । फलमित्यनुषज्यते । तथा च साध्यव्याप्त्यभावोन्नायकरूपवत्त्वं प्रकृतपक्षसाध्यबाधितत्वम् । अपक्षधर्मे-

यद्यपि प्रकृतहेतोर्न तत्फलमिति तत्फलकत्वं न बाधितहेतोर्लक्षणम्, तथापि तत्फलकदोषवत्त्वं तल्लक्षणमिति नानुपपत्तिः। हेतुपदस्य प्रकृता प्रकृतसाधारणहेतुपरत्वे तदुपादानमफलमव्यावर्तकत्वादिति पक्षधर्मे व्याप्तिबाध इत्येवोच्येत, अतः प्रकृतहेतुपरमेव तद्वाच्यमित्याशयेनाऽपक्षधर्मप्रकृतहेतुकबाधस्य फलान्तरं पूरयति। अपक्षधर्म इति। प्रकृतहेत्वर्थकं हेताविति पूर्वोक्तमनुषंजनीयम्। एतत्कल्पे फलाननुगमात् तद्घटितलक्षणाऽव्याप्तिमाशंक्याऽन्यतरत्वेन फलानुगमे मूलाभिप्राय इति दर्शयति। तथा चेति। हेताविति। प्रकृत इत्यादि। व्याप्तिभङ्गे साध्ये साध्याभाववत्पक्षवृत्तित्वं हेतुः, पक्षस्य साध्याभाववत्त्वेनैव निवेशः, नतु पक्षतावच्छेदकस्यापि तत्र प्रवेश इति न व्यर्थविशेषणता। पक्षधर्मताभङ्गे साध्ये पक्षनिष्ठाभावप्रतियोगिसाध्यव्याप्यत्वं हेतुः।

व्याप्यप्रकृतहेतुकबाधस्थले इति। अपक्षधर्मः अथ च प्रकृतसाध्यव्याप्यो यो हेतुः तादृशहेतुकबाधस्थले इत्यर्थः। ह्रदोवन्हिमान् धूमादित्यत्र बाधे इति यावत्। तत्फलासंभवादिति बाधफलासंभवादित्यर्थः। धूमस्य वन्हिव्याप्यत्वादितिभावः। फलघटितेति व्याप्त्यभावोन्नायकत्वघटितेत्यर्थः। दीधितौ-प्रकृतेऽन्यत्र वेति। तथा च हेतुत्वमविवक्षितमिति भावः। तथा च हेतुपदस्य प्रकृताप्रकृतसाधारणत्वे। द्रव्यत्वे व्याप्त्यभावानुमितिसंभवेपिप्रकृतहेतौ न तत्संभव इत्याशंकते। यद्यपीति। प्रकृतहेतोः-धूमस्य। न तत्फलमिति। व्याप्त्यभावानुमितिः फलमित्यर्थः। तत्फलकत्वं-व्याप्त्यभावानुमितिफलकत्वम्। हेतोस्तत्फलकत्वविरहेपि तत्फलकदोषवत्वं निराबाधमिति समाधत्ते। तथापीति। तत्फलकेति। व्याप्त्यभावानुमितिफलकेत्यर्थः। तदुपादानं-हेतुपदोपादानम्। इत्येवोच्यतामिति। एवकारेणहेतुपदव्यावृत्तिः अतः-अफलत्वात्। प्रकृतहेतुपरमेवेति। एवकारेणाऽप्रकृतव्यावृत्तिः। तद्वाच्यम्-हेतुपदं वाच्यम्। इत्याशयेनेति एवं च ह्रदोवन्हिमान्धूमादित्यत्र न व्याप्तिबाधः फलमित्याशयेनेत्यर्थः। अपक्षधर्मप्रकृतहेतुकबाधस्येति। अपक्षधर्मप्रकृतसाध्यव्याप्यप्रकृतहेतुकबाधस्येत्यर्थः। ह्रदपक्षकवन्हिसाध्यकधूमहेतुक बाधस्येति यावत्। एतत्कल्पे। पक्षधर्मताबाधकल्पे। तद्घटितेति। फलघटितेत्यर्थः। न व्यर्थविशेषणतेति। ननु तयोरप्रवेशे पर्वतो धूमवान् वन्हेरित्यादौ बाधितत्वापत्तिः, साध्याभाववद्वृत्तित्वस्य हेतौ सत्वात्, एवं पक्षधर्मताभङ्गे साध्ये पर्वतः सत्तावान् ह्रदत्वादित्यत्रातिव्याप्तिः, पक्षनिष्ठाभावप्रतियो-

प्रकरणसमे तु न व्याप्तिपक्षधर्मताबाधः फलम्, नाप्यलिंगत्वज्ञानं, व्याप्त्यादिबुद्धिसत्वात्। नापि विपरीतबुद्धिः, स्वसाध्यविपरीतेनाऽनियमात्। नापि संशयः, प्रत्येकं कोटिद्वयानुपनयात्। किं तु कथमत्रतत्वनिर्णयः. इति जिज्ञासाफलम्।

अत्रापि साध्यस्य तादृशाभावप्रतियोगित्वेनैव निवेशः, न तु साध्यतावच्छेदकस्य तत्र प्रवेशः, हेतुद्वयमेव बाधघटितमिति बाधस्यान्यतरफलकत्वमुभयत्र।

मूले व्याप्त्यादिबुद्धिसत्वादिति। सद्धेतोरपि विरोधिपरामर्शदशायां सत्प्रतिपक्षत्वात्, तत्र व्याप्तिपक्षधर्मताप्रतिपत्तिसत्वादित्यर्थः। तथा च प्रकरणसमदोषस्य व्याप्त्यादिविरहोन्नायकत्वासंभवादिति भावः। विपरीतबुद्धिः- स्वसाध्याभावानुमितिः- सत्प्रतिपक्षहेतोःफलमिति शेषः। स्वसाध्यविपरीतेनानियमादिति। धूमादिहेतोर्वन्ह्याद्यभावव्याप्यत्वाभावादित्यर्थः। संशय इति

गिव्याप्यत्वस्य हेतौ सत्वादितिचेन्न। प्रकृतपक्षवृत्तिहेतुधर्मिकपक्षावृत्ति साध्यव्याप्त्यभावविधेयकसाध्याभाववद्वृत्तित्वहेतुकानुमितित्वावच्छिन्नजन्यता. एवमपक्षधर्महेतुधर्मिकसाध्याभाववत्पक्षवृत्तित्वाभावविधेयकपक्षनिष्ठाभावप्रतियोगिव्याप्यत्वहेतुकानुमितित्वावच्छिन्नजन्यता. एतदन्यतरंजन्यतानिरूपितजनकताऽनतिरिक्तवृत्ति यद्रूपावच्छिन्नविषयत्वं तद्रूपावच्छिन्नवत्वमिति ध्येयम्। अत्रापि। हेतावपि। तादृशाभावप्रतियोगित्वेनैवेति। एवकारेण साध्यत्वस्य व्यावृत्तिः। हेतुद्वयमेवेति। साध्याभाववत्पक्षवृत्तित्वं पक्षनिष्ठाभावप्रतियोगिसाध्यव्याप्यत्वं चेत्यर्थः। अन्यतरफलकत्वं व्याप्त्यभाव - पक्षधर्मत्वाभावान्यतरफलकत्वम्। उभयत्र-मुले-कथमत्र तत्वनिर्णयः इति जिज्ञासा फलमिति। एतादृशतत्वनिर्णयोपायेच्छाफलिकाजिज्ञासेत्यर्थ इति। तथा च कथमत्रतत्वनिर्णयः इति जिज्ञासा-उपायेच्छा फलं यस्याः-अनयोः कितत्वमिति जिज्ञासायाः सा इत्यर्थः। नाग्रिमग्रन्थेति। अग्रिमग्रन्थस्तु प्रकृतसाध्यहेत्वोः किं तत्वमितिजिज्ञासेतिमूलम्। हेत्वोरन्यतरत्र समीचीनत्वे एवेति। एवकारेणसाध्यव्यावृत्तिः। दीधितौ-प्रकृतसाध्ययोरिति। तथा च साध्यहेत्वोर्न द्वन्द्वः किन्तु प्रकृतसाध्ययोर्हेतू इति तत्पुरुषसमासाश्रयणमिति दीधितिकृदभिप्रायः। एतादृशजिज्ञासेति। अनयोः किं तत्वमिति जिज्ञासेत्यर्थः। समीचीनत्व-

तथा च प्रकृतसाध्यहेत्वोः किं तत्वमिति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः प्रकरणसमः । न हि अनुपस्थिते प्रतिपक्षे एकस्माज्जिज्ञासा किन्तु निर्णय एव । अथ ज्ञातुमिच्छा जिज्ञासा सा च ज्ञानेष्टसाधनताज्ञानात् संशयाद्वेति कथं तेन विना विरोधिज्ञानमात्रादिति चेन्न ।

प्रकृतेति । प्रकृतसाध्ययोर्यौहेतू तयोरित्यर्थः । संशयादिति । तज्जन्यदुःखोत्सारणरूपेष्टसाधनताज्ञानात् अन्यत्र च इष्टान्तरसाधनताज्ञानाद् ज्ञानेच्छेति भेदेन विकल्पोपन्यासः । असतीत्यादि । हेतुसमीचीनत्वासमीचीनत्वसंशयजन्यदुःखाभावरूपेष्टसाधनताज्ञानद्वारेण जिज्ञासोपयोगित्वादित्यर्थः ।

कोटिद्वयोपस्थितिद्वारकसाध्यसंशय इत्यर्थः । कोटिद्वयानुपनयादिति । स्वेन स्वसाध्यस्यैवोपस्थापनादितिं भावः । इति जिज्ञासेति । एतादृशतत्वनिर्णयोपायेच्छाफलिका जिज्ञासेत्यर्थः । अनयोः किं तत्वमिति जिज्ञासेति यावत् । अतो नाग्रिमग्रन्थविरोधः । ननु स्वस्वव्याप्त्यादिमत्तयोपस्थितयोर्हेत्वोरन्यतरसमीचीनत्व एव जिज्ञासा, तद्व्यक्ति 'अत्रहेतुसमीचीनत्व' इति । तथा च प्रकृतसाध्यहेत्वोरिति यथाश्रुतमसंगतमित्यतो दीधितिकृद्धेतुद्वयार्थकतया तद्व्याचष्टे । प्रकृतसाध्ययोरिति । किं तत्वमितिमूलस्य कः समीचीन इत्यर्थः । एतादृशजिज्ञासाप्रयोजकत्वं समीचीनत्वादिसंशयसाधारणमतस्तद्वारणाय पक्षधर्मतोपस्थितिरिति । उदासीनव्याप्त्याद्युपस्थितिवारणाय विशेषणदलम् । न च व्याप्त्यादेरननुगमात् सर्वसाधारणरूपेण तदुपस्थितिनिवेशाऽसंभवात् विशिष्य प्रकृतसाध्यतदभावव्याप्त्याद्युपस्थितिनिवेशस्यावश्यकत्वे जनकान्तवैयर्थ्यमिति वाच्यम् । अनुमिति-

संशयादीति । अयं हेतुः समीचीनो न वेतिसंशयादीत्यर्थः । आदिना इष्टसाधनताज्ञानपरिग्रहः । तद्वारणाय । तादृशसंशयवारणाय । विशेषणदलमिति । जनकान्तमित्यर्थः । प्रकृतसाध्यहेत्वोः किं तत्वमिति जिज्ञासाजनिकेति यावत् । तथा चोदासीनव्याप्त्याद्युपस्थितौ तादृशजिज्ञासाजनकत्वाभावान्नातिव्याप्तिः । तद्वैयर्थ्यमाशंकते । न चेति । आवश्यकत्वे इति । तथा च तत एवोदासीनव्याप्त्याद्युपस्थितिवारणमितिभावः । अनुमितिचरमकारणत्वेन-सामान्यधर्मेण । अनियमेन । सर्वत्र सत्वानियमेन ।

असति प्रतिपक्षे न जिज्ञासा सति सेत्यन्वयव्यतिरेकाभ्यां प्रकरणसमस्यापि जिज्ञासाकारणत्वात्। न चानैकान्तिकातिव्याप्तिः। तत्र हि संशयद्वारा साध्ये जिज्ञासा, अत्र तु हेतुसमीचीनत्वे इति।

चरमकारणत्वेन व्याप्त्याद्यन्तरोपस्थितिसाधारणेन तन्निवेशसंभवात्। यादृशपरामर्शसहकारेण यादृशपरामर्शस्योक्तजिज्ञासाजनकत्वं तादृशपरामर्शसहिततादृशपरामर्शनिवेशात् जिज्ञासास्वरूपयोग्यैकतरपरामर्शदशायां नातिप्रसंगः। प्रकरणसम इति। दोष इति शेषः। प्रकृतसाध्यव्याप्यवत्तापरामर्शतदभावव्याप्यवत्तापरामर्शयोर्जिज्ञासाजनने मिथः सहकारितां व्यवस्थापयति। नह्यनुपस्थिते इति।

असतीत्यर्थः। प्रतिपक्षे-विरोधिपरामर्शान्तरे। एकस्मात् परामर्शात्। निर्णयः-एकतरसाध्यस्य एकतरसमीचीनत्वस्य-निर्णयः। फलोपधानगर्भलक्षणमेकपरामर्शदशायां नातिप्रसक्तमित्येतत्परता न नहीत्यादेः जिज्ञासोपधानस्याऽनियमेन तद्घटितलक्षणस्याऽव्याप्त्या विवक्षणाऽसंभवात्। ननु इष्टसाधनताज्ञानात् संशयाद्वेति विकल्पोऽसंगतः, ज्ञानगोचरेच्छादशायां तादृशेष्टसाधनताज्ञानस्य सर्वत्रैव हेतुतया संशयकल्पे एतत्कल्पव्यवच्छेदायोगादित्यत इष्टभेदाभिप्रायकतया विकल्पं सङ्गमयति। संशयजन्य इति। संशयजन्यदुखस्य उत्सारणं कारणीभूतसंशयविघटनेनानुत्पादः-तद्रूपं यदिष्टं तत्साधनताज्ञानादित्यर्थः। एवं च मूलोक्तसंशयस्य जिज्ञासाहेतुत्वं दुःखं जनयित्वा तदभावोपस्थापनेन तदभावेच्छासंपादनद्वारेति स्फुटीकृतम्।

तद्घटितेति। जिज्ञासोपधायकघटितेत्यर्थः। अव्याप्त्या। तादृशजिज्ञासानुपधायके सत्प्रतिपक्षेऽव्याप्त्या। इष्टसाधनताज्ञानस्यैवेति। एवकारेण 'समीचीनत्व' संशयव्यावृत्तिः। तत्कल्पव्यवच्छेदायोगादिति। इष्टसाधनताज्ञानव्यवच्छेदाऽयोगादित्यर्थः। तद्रूपं-दुःखाभावरूपं। तदभावोपस्थापनेन। दुःखाभावोपस्थापनेन। तदभावेच्छासंपादनद्वारेति। दुःखाभावेच्छासंपादनद्वारेत्यर्थः।

ननु परामर्शयोरेकदाऽनुत्पादात्कथं प्रतिरोधः। क्रमोत्पन्नयोरेकदा सत्वादिति चेन्न। एकानन्तरमपरव्याप्तिपक्षधर्मताज्ञानाभ्यामग्रिमव्याप्तिविशिष्टज्ञानोत्पत्तिकाले पूर्वपरामर्शनाशात्।

नचोभयहेतुव्याप्तिपक्षधर्मताज्ञानानां परस्पराप्रतिबन्धकत्वात्परामर्शोत्पाद इति वाच्यम्। व्याप्त्यादिज्ञानचतुष्टयज्ञानयौगपद्याभावात्। यत्तु व्याप्तिद्वयसंस्कारोद्बोधकहेतुद्वयज्ञानयोः परस्परप्रतिबन्धान्नोभयस्मृतिरिति दूषकताबीजम्। तन्न। व्याप्तिस्मृतिं विना सत्प्रतिपक्षाभावात्, वादिभ्यां व्याप्त्युद्भावनाच्चेति। मैवम्। हेतुद्वयसमूहालंबनाद्युगपदुभयव्याप्तिस्मृतौ उभयपरामर्शरूपं ज्ञानमुत्पद्यते। एकदा विरुद्धद्वयकार्यकारणान्नैकमपिकार्यमुत्पद्यते। तादृशपरामर्शश्च स्वार्थानुमाने प्रत्यक्षादितः, परस्यतु वाद्युपन्यस्तन्यायोत्थापितप्रमाणात्।

उत्पत्तिकाले—उत्पत्तिपूर्वकाले। व्याप्तिपक्षधर्मताज्ञानयोरुत्पादक्रमाऽनियमादुभयोर्नाशकत्वमुक्तम्। उत्पत्तावेव वा तयोरन्वयः। यत्र च व्याप्तिपक्षधर्मतयोः समूहालंवनं तत्र द्वितीयपरामर्शोत्पत्तिकाले एव प्रथमपरामर्शनाशः।

अन्यत्र- संशयाभावदशायाम्। इष्टान्तरेति। व्यवहाररूपेत्यादि। तथा च मूले इष्टपदं तद्विशेषपरमित्यर्थः। ज्ञानेच्छा-एकतरकोटिनिश्चयेच्छा। प्रतिपक्षसंवलनस्य जिज्ञासायामतिव्यवहितस्यान्यथासिद्ध्याऽकारणत्वात् जिज्ञासाहेतुत्वादिति मूलं तत्प्रयोजकत्वार्थकतया द्वारं प्रदर्शयन् व्याचष्टे। हेत्विति। समीचीनत्वं प्रमितव्याप्तिपक्षधर्मताकत्वं स्वसाध्यानुमित्यौपयिकप्रमात्मकपरामर्शविषयत्वमिति यावत्। तत्संशयश्च परामर्शप्रामाण्य-

स्फुटीकृतमिति। उपायेच्छां प्रति फलेच्छाया हेतुतया तत्वनिर्णयेच्छाजनिका या दुःखाभावेच्छा तज्जनकं यद् दुःखाभावज्ञानं तज्जनकं यदुःखज्ञानं तज्जनकं यद्दुःखं तज्जनकत्वात्संशयस्य परंपरया तादृशेच्छाजनकत्वमिति भावः। तद्विशेषपरमिति। इष्टविशेषपरमित्यर्थं। तथा च तत्वनिश्चय इष्टसाधनमिति शब्दप्रयोगं प्रति व्यवहर्तव्यज्ञानविधया इष्टसाधनताज्ञानं हेतुरिति भावः।

संशयपर्यवसित इति बोध्यम्। अनैकान्तिकातिव्याप्तिरिति. मूलं यद्यपि अनैकान्तिकत्वोपस्थितेर्व्याप्तिपक्षधर्मतोपस्थितित्वाभावान्नैतादृशशंकावसरः तथापि तदुपस्थितेरपि उदासीनव्याप्त्यादिविषयकत्वसंभवात्तत्संगतिः। संशयद्वारा- साध्यसंशयद्वारा।

युगपत्परामर्शद्वयानुत्पादेऽपि क्रमिकपरामर्शद्वयसंवलनात्प्रतिरोध इति शंकते। क्रमोत्पन्नयोरिति। एकपरामर्शानन्तरमपरपरामर्शजनकव्याप्तिज्ञानपक्षधर्मताज्ञानयोर्द्वयोः क्रमेणैवोत्पत्तिः, तथा च प्रथमपरामर्शचतुर्थक्षणे एव परामर्शान्तरोत्पत्तिः, तदानीं च पूर्वपरामर्शनाशोनोत्पद्यते अपि तु, स्वद्वितीयक्षणोत्पन्नविशेषगुणात्तृतीयक्षणे एवेत्युत्पत्तिकालपदं तत्पूर्वकालपरतया व्याचष्टे। दीधितौ- उत्पत्तिपूर्वकाले इति। नाशादित्यतः नाशोत्पत्तिरौत्सर्गिकीत्याशयेनेदं व्याख्यानम्, नाशसत्त्वार्थकत्वे तु यथाश्रुतमेव संगच्छते। अनन्तरोत्पन्नस्यैव च गुणस्य नाशकतयैकत्रोभयोः व्याप्तिपक्षधर्मताज्ञानयोः पूर्वज्ञाननाशकत्वासंभवात्, पृथक् स्थलीयनाशकत्वाभिप्रायकतया ज्ञानाभ्यां विनाशादिति मूलं संगमयति। व्याप्तीति। उत्पादक्रमानियमादिति। व्याप्तिज्ञानोत्तरमेव पक्षधर्मताज्ञानं तदनन्तरमेव व्याप्तिज्ञानमुत्पद्यते इति नियमाभावादित्यर्थः। उभयोर्नाशकत्वमुक्तमिति। उक्तज्ञानयोर्यज्ज्ञानं प्रथमतो यत्रोत्पद्यते तत्र तस्य नाशकत्वादिति भावः। विशिष्टज्ञानोत्पत्तिकाले" इत्यत्रोत्पत्तौ तादृशज्ञानयोर्हेतुत्वेनान्वये एकत्रैवोभयहेत्वन्वययोग्यतानिर्वाहात् किं स्थलभेदानुसरणेनेत्याशयेनाह। उत्पत्तावेव वेति। व्याप्तिपक्षधर्मताविषयकैकज्ञानस्थलेऽपिपरामर्शयोर्यौगपद्यं न संभवतीति स्वयमाह। यत्रचेति।

तदानीं च। पूर्वपरामर्शचतुर्थक्षणे च। स्वद्वितीयक्षणोत्पन्नेति। स्वं- पूर्वपरामर्शः। तृतीयक्षणे एवेति। स्वतृतीयक्षणे इत्यर्थः। एवकारेण चतुर्थक्षणव्यावृत्तिः। तथा च व्याप्तिपक्षधर्मताज्ञानाभ्यामित्यस्य पूर्वपरामर्शनाशेऽन्वयः, उत्पत्तिपूर्वकाले इति द्वितीयपरामर्शोत्पत्तिपूर्वकाले इति यावत्। एकत्र। एकस्थले। पूर्वज्ञाननाशकत्वासंभवादिति। उभयोर्नाशकत्वाभिधानमसंगतमिति भावः। एकत्रैव। विशिष्टज्ञानोत्पत्तावेव। उभयेति। व्याप्तिज्ञानपक्षधर्मताज्ञानोभयेत्यर्थः। उत्पत्तावेवेति। एवकारेण पूर्वपरामर्शनाशव्यावृत्तिः तथा च व्याप्तिपक्षधर्मताज्ञानाभ्यां अग्रिमव्याप्तिविशिष्टज्ञानस्य "परामर्शस्य" या उत्पत्तिस्तत्काले इति मूले ऽन्वयः। एवं च पूर्वकाले इत्यादिकं न व्याख्येयमिति भावः। दीधितौ—व्याप्तिपक्षधर्मतयोःसमूहालंबनमिति। तथा च व्याप्तिपक्षधर्मताज्ञानाभ्यामिति मूले विभक्त्युपस्थाप्यं द्वित्वं व्युत्पत्तिवैचित्र्येण पदार्थतावच्छेदकीभूतयोर्व्याप्तिपक्षधर्मत्वयोरेवान्वितमित्याशयः। द्वितीयपरामर्शोत्पत्तिकाले एवेति। एवकारेण पूर्वकाल व्यावृत्तिः।

अस्य केवलान्वयिन्यपि संभवः, घटोभिधेयः प्रमेयत्वादित्यत्राभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि जात्यन्यत्वे सति घटमात्रवृत्त्यन्यधर्मत्वात् घटान्योन्याभाववत् पटरूपवच्च, घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिकः घटवृत्तिनित्याभावत्वात् घटनिष्ठान्योन्याभाववदिति विशेषादर्शनदशायाम्। न च पक्षैक्यमपि तंत्रम्। विरोधस्यैव दूषकत्वे अधिकस्य व्यर्थत्वात् इति सत्प्रतिपक्षचिन्तामणिः।

अस्य निरुक्तसत्प्रतिपक्षितत्वस्य। जात्यन्येति। सत्ता कंबुग्रीवादिमत्वादावेकैकस्य व्यभिचाराद्विशिष्टोपादानम्। घटनिष्ठेति। घटनिष्ठात्यन्ताभावत्वेन सामान्यतः पक्षत्वान्न बाधाश्रयासिद्धी। ननु आद्यस्य समवेतत्वादौ द्वितीयस्य पटत्वाभावादौ व्यभिचार इत्यत आह विशेषादर्शनेति। वस्तुतो घटो नाभिधेयः कम्बुग्रीवादिमत्त्वात् इत्यादिव्यतिरेकिणा सत्प्रतिपक्षः सम्भवत्येव। व्यापकाभावेन अप्रसिद्धस्यापि व्याप्याभावस्य सिद्ध्युपगमात्। प्रत्येकपदार्थप्रसिद्धौ तादृशप्रतिज्ञाद्युपपत्तेर्विशिष्टस्य वाक्यार्थत्वात्।

मूले--उभयहेतुव्याप्तिपक्षधर्मताज्ञानानामिति। परामर्शद्वयहेतुव्याप्तिपक्षधर्मताज्ञानचतुष्टयस्येत्यर्थः। परस्पराऽप्रतिबन्धकत्वात्-एकसत्वस्यापरसत्वाविघटकत्वात्। परामर्शोत्पाद इति। व्याप्त्यादिज्ञानचतुष्टयाधीनस्यैकदा समूहालंबनरूपस्याविरलक्रमेण वोभयव्याप्यवत्ताज्ञानस्योत्पाद इत्यर्थः। विशिष्टपरामर्शयोरेकदानुत्पादस्तृतीयक्षणे च विनाशः, नेतरज्ञानस्य तन्नियम इत्यभिमानेनेयमाशंका। अभिमानं निराकरोति। व्याप्त्यादीति। यौगपद्याभावात्-युगपदवस्थानाऽसंभवात्। ज्ञानमात्रे एव उक्तनियमादिति भावः। परस्परप्रतिबन्धात्-परस्परजन्यव्याप्तिस्मृतिप्रतिबन्धकत्वात्। समूहालंवनपक्षधर्मताद्वयज्ञानात्समूहालंवनरूपं व्याप्तिद्वयस्मरणं, ततः समूहालंवनमुभयव्याप्यवत्ताज्ञानं प्रतिरोधप्रयोजकमिति समाधत्ते। मैवमिति।

स्वयं निर्वक्ष्यमाणस्य नित्यसत्प्रतिपक्षदोषस्य साध्याभावव्याप्यवत्पक्षत्वादिरूपस्य केवलान्वयिसाध्यके साध्याभावाप्रसिद्ध्याऽसंभवात्। अस्येति मूलं निरुक्तव्यवहारौपयिकपरामर्शसंवलनात्मकसत्प्रतिपक्षत्वपरतया व्याचष्टे। अस्येति। अभिधेयत्वे द्वित्वाद्यवच्छिन्नाभावप्रतियोगित्वसाधारणरूपेण घटनिष्ठाभावप्रतियोगित्वज्ञानस्य विरोध्य-

विषयकत्वेन घटेऽभिधेयत्वज्ञानाऽप्रतिबन्धकतया तत्सामग्र्या न सामान्यतोऽभिधेयत्वानुमानप्रतिरोध इत्यभिधेत्वमिति ग्रन्थस्याभिधेयत्वत्वपक्षकघटनिष्ठाभावप्रतियोगितावच्छेदकत्वसाध्यकजात्यवृत्तित्व विशिष्टघटमात्रवृत्तितानवच्छेदकत्वलिंगकानुमाने तात्पर्यं, दृष्टान्तोपि घटान्योन्याभावत्वं पटरूपत्वं च। दीधितौ–सत्ताकंबुग्रीवादिमत्वादीति, यथाश्रुतमूलानुसारेण, यथाविवक्षिते तु सत्तादिपदं सत्तात्वादि परम्। एकैकस्येति। केवलविशेष्यविशेषणयोरित्यर्थः।

ननु घटनिष्ठात्यन्ताभावइत्यनेन प्रसिद्धपटत्वाद्यभावविवक्षणे तत्राभिधेयत्वप्रतियोगिकत्वस्य वाधान्न साधनसंभवः, अभिधेयत्वाभावस्य चाऽ प्रसिद्ध्या न पक्षत्वसंभव इत्याशंकां निरसितुमाह। घटनिष्ठात्यन्ताभावत्वेनेति। उभयमते प्रसिद्धेनेत्यादिः। सामान्यतः-सामान्यरूपेण। न वाधेति। सामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वान्नांशतोवाधोदोषः। अभावस्य कस्यचिदभिधेयत्वप्रतियोगिकत्वमपीतिविवादे पक्षतावच्छेदकावच्छेदेन वाधोदुर्निश्चेयः-पक्षतावच्छेदकप्रसिद्ध्यैव नाश्रयासिद्धिरित्यर्थः। ननु स्वरूपसंबन्धेनाभिधेयत्वत्वावच्छिन्नसाध्यकानुमितौ पक्षनिष्ठाभावे तत्संवन्धावच्छिन्नविशेषिताभिधेयत्वत्वावच्छिन्नप्रतियोगिकत्वानुमितिरेव विरोधिनी, तादृशं च साध्यमप्रसिद्धम्,। न च घटनिष्ठस्वरूपसंवन्धावच्छिन्नप्रतियोगिताकाभावत्वेन पक्षत्वादुद्देश्यसिद्धिः स्वरूपसंवन्धावच्छिन्नगगनाभावस्य संयोगसंवन्धावच्छिन्नाभिधेयत्वत्वावच्छिन्नप्रतियोगिताकाभावसमनैयत्येनाभिन्नतया सिद्धसाधनस्यदु

. तात्पर्यमिति। अभिधेयत्वत्वं घटनिष्ठाभावप्रतियोगितावच्छेदकं जात्यवृत्तित्वविशिष्टघटमात्रवृत्तितानवच्छेकत्वात् घटान्योन्याभावत्ववत् पटरूपत्ववदित्यत्र तात्पर्यमिति भावः। सत्तादिपदमिति। आदिना कंबुग्रीवात्वपरिग्रहः। केवलविशेष्यविशेषणयोरिति। अस्य व्यभिचारादित्यन्वयः। घटमात्रवृत्यन्यत्वं सत्तायां, जात्यन्यत्वं च कंबुग्रीवादिमत्वे व्यभिचारीत्यतो विशिष्टो हेतुरिति भावः।

अत्र सत्तापदं मूलस्थजातिपदं च भावत्वपरम्, तेन सत्तायां स्वरूपसंबन्धावच्छिन्नघटनिष्ठाभावप्रतियोगित्वरूपस्य साध्यस्यापि सत्वेन व्यभिचारविरहाद्विशेषणदलवैयर्थ्यमिति शंकानवकाशः। घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिक इत्यत्र बाधमाशंकते। नन्विति। ननु घटनिष्ठात्यन्ताभावपदेनाऽ

वीरत्वादिति चेत्सत्यम्- स्वरूपसंबन्धावच्छिन्नायां घटनिष्ठाभावप्रतियोगितायां घटनिष्ठनित्याभावप्रतियोगितात्वेन हेतुना घटनिष्ठाभिधेयत्वभेदप्रतियोगितादृष्टान्तेनाभिधेयत्वत्वावच्छिन्नत्वानुमाने तात्पर्येण सामंजस्यम्।

मूले—विशेषादर्शनदशायामिति। व्यभिचारिण्यपि एतादृशहेतौ व्यभिचाराग्रहदशायामित्यर्थः व्यभिचारास्फूर्तौइतियावत् केवलान्वयिन्यपि संभव इत्यनेनाऽस्यान्वयः व्यभिचारस्थलं दर्शयन्नेतत्कथनप्रयोजनमाह। दीधितौ- नन्विति आद्यस्य- जात्यन्यत्व इत्यादिप्रथमानुमानहेतोः। द्वितीयस्य- घटवृत्तीत्यादिद्वितीयानुमानहेतोः। प्रतियोगित्वादिप्रकारकबाधबुद्धेर्विशिष्टबुद्धिविरोधिताया नव्यैरनभ्युपगमात्, तथासति तत्संबन्धादिप्रकारकबुद्धेरपिविरोधापातात् नोक्तानुमानेन घटोऽभिधेयः प्रमेयत्वादित्यनुमानप्रतिरोधसंभव इति स्वयमभिधेयत्वरूपप्रतियोगिप्रकारेणाऽभावानुमानमेव मूलकृता साध्याप्रसिद्ध्योपेक्षितमपि प्रतिरोधकतया व्यवस्थापयति वस्तुत इति। साध्याऽप्रसिद्ध्याऽ न्वय्यनुमानाऽसंभवात्, घटादिसाधारणद्रव्यत्वादेः पटादौ व्यभिचारग्रहसंभवेन व्यतिरेकितयापि साधकतायाः स्फुटत्वाभावेन पक्षमात्रवृत्तिकंबुग्रीवादिहेतुताकव्यतिरेक्यादरः।

अभावसाध्यकव्यतिरेकितायां साध्यप्रसिद्धेरनपेक्षां दर्शयति। व्यापकाभावेनेति। पटादावभिधेयत्वादिव्यापकतया गृहीतस्य कंबुग्रीवादिमत्वाभावस्याभावेन कंबुग्रीवादिमत्वेनेत्यर्थः अप्रसिद्धस्यापि- प्रतियोगितयाऽभिधेयत्वादिकं प्रकारीकृत्याज्ञातस्यापि। व्याप्याभावस्य- व्याप्यतया गृहीतमभिधेयत्वादिकं प्रतियोगितया प्रकारीकृत्य वस्तुभूतस्याऽभावान्तरस्य। सिद्ध्युपगमात्-अप्रसिद्धसाध्यकानुमानस्यैकदेशिनामेवानुमततयाऽ भ्युपगमोक्तिः। कंबुग्रीवादिमत्वाभावस्य वास्तवाभिधेयत्वव्यापकताविरहादवस्तुभूताभिधेयत्वाभावस्यानुमित्याऽवगाहनाऽसंभवात्, प्रसिद्धपटत्वाभावस्य व्याप्यतया गृहीताभिधेयत्वप्रतियोगिकत्वाभावात् व्यापकाभावेनेत्यादेर्यथाश्रुतस्याऽसंगतिर्बोध्या व्यवहर्तव्यविशिष्टाप्रसिद्धावपि न विशिष्टार्थपरप्रतिज्ञाद्यसंभव इत्याह। प्रत्येकपदार्थप्रसिद्ध्यैवेति। तावतैव भ्रमात्मकस्य व्यवहारोपयोगिविशिष्टज्ञानस्य संभवात् विशिष्टज्ञानं विनापितत्तद्विशेष्यांशे तत्तद्विशेषणावगाहित्वेन तात्पर्यघटकप्रतीतेर्ज्ञानेन विशिष्टबोधकवाक्यप्रयोगसंभवाच्चेति भावः।

सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान् साध्यवदन्यत्वव्याप्यवांश्च पक्षः, पक्षनिष्ठौ साध्याभावसाध्यवद्भेदव्याप्यौ इत्येवमादिः प्रत्येकमेव ।

अतः परं विभाजकलक्षणम् मूलकृता सत्प्रतिपक्षहेतुदोषानभिधानात्स्वयं तान्दर्शयति । सत्प्रतिपक्षस्त्विति । सत्प्रतिपक्षहेतोर्दोषस्त्वित्यर्थः । तुकारेण मूलनिरुक्तसत्प्रतिपक्षव्यवहारविषयतावच्छेदकरूपस्य दोषत्वव्यवच्छेदः । व्याप्यवान्- व्याप्यविशिष्टः । पक्षनिष्ठौ- आधेयतया पक्षविशिष्टौ । एवमादिरिति । आदिपदादाधेयतासंबन्धेन प्रकृतपक्षसाध्यकप्रकृतसाध्यभावादिपक्षकानुमितिजनकपरामर्शविषयप्रकृतपक्षव्याप्यविशिष्टप्रकृतसाध्याभावादिपरिग्रहः । पक्षे साध्याभावइत्यादिवाधबुद्धेरपि पक्षे साध्यानुमितिविरोधितया तादृशवाधोन्नायकस्यापि परामर्शस्यानुमितिविरोधित्वेन तद्विषयविशिष्टस्यापि सत्प्रतिपक्षतौचित्यात् । अत एव साध्यतद्वदभावयोराधेयतया साध्यीभवत्पक्षव्याप्यवत्ताज्ञानसंवलनदशायां पक्षो साध्यं साध्याभावोवेति कोटिविशेष्यकसंशयरूपा नानुमितिः । प्रत्येकमेवत्यनेन तावत्समुदायत्वस्य सत्प्रतिपक्षदोषविभाजकत्वासंभवोदर्शितः ।

भिधेयत्वाभावमादाय न वाध इत्यत आह । अभिधेयत्वाभावस्य चेति । तत्तदभावभिन्नत्वेन पक्षविशेषणत्वे वाधविरहेपि आश्रयासिद्धिर्वोध्या । तात्पर्येणेति । स्वरूपसंबन्धावच्छिन्नघटनिष्ठाभावप्रतियोगित्वं अभिधेयत्वत्वावच्छिन्नत्ववत् घटनिष्ठनित्याभावप्रतियोगितात्वात् घटनिष्ठाभिधेयत्वभेदप्रतियोतावदित्यनुमाने तात्पर्येणेत्यर्थः । सामंजस्यमिति । न बाधाश्रयासिद्धी इति भावः ।

जात्यन्यत्वे इत्यादीति । जात्यन्यत्वे सति घटमात्रवृत्त्यन्यधर्मत्वरूपहेतोरित्यर्थः । दीधितौ- समवेतत्वादाविति । साध्यविरहिण तस्य जात्यन्यत्वे सति घटमात्रवृत्त्यन्यत्वादिति भावः । घटवृत्तीत्यादीति । घटवृत्तिनित्याभावत्वरूपहेतोरित्यर्थः । पटत्वाभावादाविति । तस्य घटवृत्तिनित्याभावत्वादिति भावः ।

समानधर्मिकस्यैव विरोधिपरामर्शस्य सत्प्रतिपक्षत्वमिति नव्यमतानुसारेणाह । प्रतियोगित्वादिप्रकारकेति । घटनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारकेत्यर्थः । आदिना अभिधेयत्वप्रतियोगिकत्वप्रकारकपरिग्रहः । वाधबुद्धेः-अभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगीतिनिश्चयस्य,: घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिक इति निश्चयस्य च । विशिष्टबुद्धिविरोधितायां इति । घटोऽभिधेय इति बुद्धिविरोधितायां इत्यर्थः । तथासति । प्रतियोगित्वादिप्रकारकबाधबुद्धेर्विरोधित्वे सति ।

विभाजकम् तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति विशिष्टपक्षसाध्यग्रहाविरोधि प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम् ।

ननु प्रत्येकरूपस्याऽव्याप्त्या विभाजकत्वाऽसंभवात्सर्वसाधारणं किमेतद्दोषविभाजकमित्याकांक्षायां तादृशरूपमाह । विभाजकं त्विति । सर्वत्र प्रकृतेति पक्षसाध्ययोर्द्वयोरेवाऽन्वेति ।

तत्संवन्धादीति । आदिना तत्संवन्धपरिग्रहः । उक्तानुमानेन । उक्तानुमानद्वयेन । अभावानुमानमेव । अस्य प्रतिरोधकतया व्यवस्थापयतीत्यनेनाऽन्वयः । द्रव्यत्वमेव हेतुरस्तु किं कंवुग्रीवादिमत्वहेतुनेत्यत आह । द्रव्यत्वादेरिति । दीधितौ- व्यतिरेकिणेति । प्रमेयत्वव्यापकीभूताभावप्रतियोगित्वेन कंवुग्रीवादिमत्तानिश्चयेनेत्यर्थः ।

अतः परमिति । सत्प्रतिपक्षित इति व्यवहारोपयिकलक्षणानन्तरमित्यर्थः । विभाजकलक्षणमिति । विभाजकतावच्छेदकमित्यर्थः प्राहेतिशेषः । इदानीमनुमितिप्रतिवन्धकज्ञानविषयतावच्छेदकानामननुगमेन पंचविधविभागानुपपत्त्या तेषामनुगमकं वक्तुं भूमिकामाहेति भावः । सत्प्रतिपक्षपदेन प्रायशः सत्प्रतिपक्षहेतोरेव वोधनादाह । सत्प्रतिपक्षहेतोरिति । निरुक्तेति । साध्यविरोध्युपस्थापनसमर्थसमानवलोपस्थित्या प्रतिरुद्धकार्यकपरामर्शविषयत्वात्मकेत्यर्थः । दोषत्वमन्यवच्छेद इति । तद्रूपावच्छिन्नविषयकज्ञानस्याऽनुमित्यविरोधित्वादिति भावः । अत एवेति । पक्षे साध्याभाव इति वाधोन्नायकपरामर्शस्य विरोधित्वादेवेत्यर्थः । साध्यीभवत्पक्षव्याप्यवत्ताज्ञानसंवलनदशायामिति । पक्षव्याप्यवत्साध्यं-साध्याभावश्च पक्षव्याप्यवानितिज्ञानसंवलनदशायामित्यर्थः । प्रत्येकरूपस्येति । साध्याभावव्याप्यवत्पक्षत्वादेरित्यर्थः । अव्याप्त्येति । पक्षनिष्ठसाध्याभावव्याप्यादावित्यादिः । तादृशरूपं । सर्वसाधारणदोषविभाजकं । तत्र । वन्ह्यभावव्याप्यवद्ह्रदे । तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंवन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिवन्धतावच्छेदिका सती विशिष्टपक्ष-विशिष्टसाध्यग्रहत्वाव्यापिका निरुक्तपक्षसाध्यवैशिष्ट्यग्रहत्वव्यापिका या प्रतिवध्यता तन्निरूपितप्रतिवन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका च यद्रूपावच्छिन्नविषयिता तद्रूपवत्वं लक्षणम् ।

प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदिका सती विशिष्टपक्षविशिष्टसाध्यग्रहत्वव्यापकप्रतिवध्यतानिरूपित प्रतिबन्धकतानवच्छेदकनिरुक्तपक्षसाध्यवैशिष्ट्यग्रहप्रतिवन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका याद्दशविशिष्टनिरूपितविषयिता तादृशत्वमित्यर्थः। तादृशी च वन्ह्यभावव्याप्यविशिष्टह्रदादिनिरूपितविषयितेति तत्र लक्षणसमन्वयः।

साध्याभावव्याप्यविशिष्टपक्षविषयितायाः साध्यानुमितिप्रतिबन्धकतया तदवच्छिन्नानुमितिजनकतावच्छेदकविषयिताके साध्याभावव्याप्यव्याप्यवत्पक्षादावतिव्याप्तिवारकतया सत्यन्तं सार्थकयिष्यते ।

तत्र निरुक्तप्रतिवन्धकतावच्छेदकविषयिताकत्वरूपविरोधित्वान्तार्थस्य उन्नायकविषयविशेषणत्वे विषयिताभागस्य द्विधा निवेशे-गौरवात् उन्नायकताघटकविषयितायामेव प्रतिवन्धकतावच्छेदकत्वं विशेषणं दत्तम्। पक्षतावच्छेदकादिवैशिष्ट्यनिवेशव्यावृत्तिः पूर्ववत्।

साध्याभावव्याप्यविशिष्टपक्षविषयितायाः। वन्ह्यभावव्याप्यवद्ह्रदविषयितायाः। साध्यानुमितिप्रतिवन्धकतया। ह्रदो वन्हिमानित्यनुमितिप्रतिबन्धकतावच्छेदकतया। तदवच्छिन्नानुमितिजनकतावच्छेदकविषयिताके। साध्याभावव्याप्यवत्पक्षविषयित्वावच्छिन्नानुमितिजनकतावच्छेदकविषयिताके। वन्ह्यभावव्याप्यवद्ह्रदविषयित्वावच्छिन्नानुमिनिजनकतावच्छेदकविषयिताके इति यावत्। साध्याभावव्याप्यवत्पक्षादाविति। वन्ह्यभावव्याप्यव्याप्यवद्ह्रदादावित्यर्थः। अतिव्याप्तिवारकतयेति। तथा च ह्रदोवन्हिमानित्यत्र ह्रदत्वावच्छिन्नविशेष्यतानिरुपितवन्हित्वावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदकीभूता वन्ह्यभावव्याप्यवद्ह्रदविषयिता तदवच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका या वन्ह्यभावव्याप्यव्याप्यवद्ह्रदत्वावच्छिन्नविषयिता तादृशविषयितानिरूपकतावच्छेदकत्वस्य वन्ह्यभावव्याप्यव्याप्यवद्ह्रदत्वे सत्वेन वन्ह्यभावव्याप्यव्याप्यवद्ह्रदेऽतिव्याप्तिवारणाय सत्यन्तमित्यर्थः। तदुपादाने तु सत्प्रतिपक्षव्याप्यविषयिताः प्रतिवन्धकतानवच्छेदकत्वान्नातिव्याप्तिः। तदेवाह। सार्थकयिष्यते इति। अत्र च सत्यन्तेन

उक्तप्रकारताशालिग्रहनिरूपितप्रतिबन्धकतामात्रनिवेशे साध्याभावव्याप्यव्याप्यवत्ताज्ञानस्यापि समूहालंबनसाध्यवत्ताग्रहरूप साध्याभावव्याप्याभाववादिमत्वग्रहप्रतिबन्धकतया नोपदर्शितसत्प्रतिपक्षोन्नायकव्यावृत्तिरिति तादृशप्रकारताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशः।

सत्प्रतिपक्षोन्नायकस्येति ग्रंथेनेति शेषः। तत्र। सत्यन्तदले। घटकत्वं सप्तम्यर्थः। उन्नायकविषयविशेषणत्वे। जनकतावच्छेदकविषयिताकत्वाश्रय "साध्याभावव्याप्यवत्पक्ष" विशेषणत्वे। उन्नायकत्वंच उन्नेयविषयकज्ञानजनकतावच्छेदकविषयिताकत्वं। विषयिताभागस्य। विरोधिताघटकविषयिताभागस्य उन्नायकताघटकविषयिताभागस्य च। उन्नायकताघटकविषयितायामेवेति। एवकारेण विरोधिताघटकविषयिताताया व्यावृत्तिः। तथा च पक्षेसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदिका साध्यवैशिष्ट्यग्रहविरोध्यनुमितिजनकतावच्छेदिका च या विषयिता तन्निरूपकतावच्छेदकधर्मवत्वं समुदितार्थः। पक्षतावच्छेदकादीति। आदिना साध्यतावच्छेदकपरिग्रहः। तथा च सत्यन्तदले पक्षतावच्छेदकावच्छिन्नविशेष्यत्वानुक्तावसंभव साध्यवैशिष्ट्यग्रहविरोधित्वाप्रसिद्धेः। यत्किंचिद्धर्मावच्छिन्नविशेष्यतेत्युक्तौ "वन्ह्यधिकरणत्वं पर्वते" इति वन्ह्यधिकरणत्वपक्षकाऽऽधेयतासंबन्धेन पर्वतसाध्यकस्थले वन्ह्यधिकरणत्वाभावव्याप्यव्याप्यवत्पर्वतेऽतिव्याप्तेः, यत्किंचिद्धर्मपदेन वन्ह्यधिकरणत्वव्याप्यव्याप्याभावत्वमादाय तदवच्छिन्नधर्मिकपर्वतप्रकारकानुमितिविरोधि— एवंवन्ह्यधिकरणत्वधर्मिकपर्वतसाध्यकानुमितिविरोधि यद् वन्ह्यधिकरणत्वाभावव्याप्यवत्पर्वत इति ज्ञानं तज्जनकं यद्वन्ह्यधिकरणत्वाभावव्याप्यव्याप्यवत्पर्वत इति ज्ञानं तद्विषयत्वस्य तत्र सत्वात्। एवं प्रकृतसाध्यकत्वानिवेशे ह्रदो वन्ह्यधिकरणत्ववानित्यादौ वन्ह्यधिकरणत्वाभावव्याप्यव्याप्यवद्ह्रदेऽतिव्याप्तिः। ह्रदपक्षकवन्ह्यधिकरणत्वाभावव्याप्याभावप्रकारकानुमितिविरोधित्वस्य ह्रदपक्षकवन्ह्यधिकरणत्वसाध्यकानुमितिविरोधि यद् वन्ह्यधिकरणत्वाभावव्याप्यवान्ह्रद इति ज्ञानं तज्जनकज्ञानविषयत्वस्य च तत्र सत्वात्। उक्तप्रकारताशालीति। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालीत्यर्थः। ग्रहनिरूपितप्रतिबन्धकतामात्रनिवेशे इति। ग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतामात्रनिवेशे इत्यर्थः। मात्र पदेनाऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताव्यावृत्तिः। साध्याभावव्याप्यव्याप्यवत्ताज्ञानस्यापि। वन्ह्यभावव्याप्यव्याप्यवत्ताज्ञानस्यापि। प्रतिबन्धकतया। ह्रदोवन्हिमान् वन्ह्यभावव्याप्याभाववानिति समूहालंबनग्रहप्रतिबन्धकतया। नोपदर्शितसत्प्रतिपक्षोन्नायकव्यावृत्तिरिति। तथा च वन्ह्यभावव्याप्यव्याप्यवद्ह्रदेऽतिव्याप्तितावस्य

तादृशप्रकारताशालिदोषविशेषजन्यज्ञानमाहार्यज्ञानं प्रति च साध्याभावव्याप्यवत्ताज्ञानस्याप्रतिबन्धकतया सत्प्रतिपक्षस्यैवाऽसंग्रह इति ज्ञानत्वमुपेक्ष्याऽनुमितित्वनिवेशः।

ह्रदःकाञ्चनमयवन्हिमान् काञ्चनमयह्रदोवन्हिमानित्यादौ संग्राह्यस्य वन्ह्यभावव्याप्यविशिष्ट ह्रदादेर्ज्ञानस्य प्रतिबध्यतावच्छेदककोटौ साध्यतावच्छेदकादिघटितकाञ्चनमयत्वादिविषयताया अनिवेशात्तद्घटितपक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यग्रहन्वं नोक्तज्ञानप्रतिबध्यतावच्छेदकमित्यव्याप्तिः स्यादतः स्वरूपसंबन्धरूपमवच्छिन्नत्वं परित्यज्य व्यापकत्वं प्रतिबध्यताविशेषणम्।

मितिभावः। ह्रदोवन्हिमानित्यनुमितिविरोधि यद् ह्रदोवन्ह्यभावव्याप्यवान् इति ज्ञानं तज्जनकज्ञानविषयत्वस्य तत्र सत्वाच्चेत्यपि बोध्यम्। तादृशप्रकारताकेति। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकेत्यर्थः। निवेश इति तथा च वन्ह्यभावव्याप्यव्याप्यवान्ह्रद इति--निश्चयीयप्रतिबन्धकतानिरूपितप्रतिबध्यतायास्तादृशानुमितित्वाव्यापकत्वान्नातिव्याप्तितादवस्थ्यमिति भावः। सत्प्रतिपक्षस्यैवाऽसंग्रह इति। तादृशप्रतिबध्यताया ग्रहत्वाऽव्यापकतयेत्यादिः। तथाचाऽसंभवइतिभावः।

प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यावगाहिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यग्रहविरोध्युन्नायकतावच्छेदिका यादृशविशिष्टविषयिता तादृशविशिष्टत्वं सत्प्रतिपक्षत्वमिति सत्यन्तदले तादृशग्रहत्वनिष्ठावच्छेदकताकप्रतिबध्यतानिवेशे ग्रहत्वस्य तादृशग्रहत्वानतिरिक्ततया प्रतिबध्यतामात्रस्यैव ग्रहत्वावच्छिन्नतया तादृशवैशिष्ट्यावगाहिग्रहत्वावच्छिन्नत्वविशेषणस्याऽव्यावर्तकतापत्तिरतस्तादृशवैशिष्ट्यावगाहित्वविशिष्टग्रहत्वगतसमुदायवृत्त्यवच्छेदकताकप्रतिबध्यता निवेशनीया इत्याशयेन काञ्चनमयह्रदोवन्हिमान्. ह्रदःकाञ्चनमयवन्हिमान्इत्यादौवन्ह्यभावव्याप्यवद्ह्रदरूपसत्प्रतिपक्षे स्वरूपसंबन्धरूपावच्छेदकत्वमाशंक्याव्याप्तिमाह ह्रदःकाञ्चनमयवन्हिमानित्यादि। संग्राह्यस्येति। ह्रदोवन्हिमानित्यादिस्थलानुरोधेनेत्यादिः। सामान्याभावनिश्चयस्य सामान्यवत्तावुद्धाविव सामान्यघटितविशेषवुद्धावपि प्रतिबन्धकत्वादिति भावः। अनिवेशादिति। वन्हित्वावच्छिन्नविषयताया एव प्रवेशादिति भावः। तद्घटितेति। काञ्चनमयत्वादिविषयताघटितेत्यर्थः। अव्याप्तिः स्यादिति। तत्प्रतिबध्यतावच्छेदकत्वस्य तादृशवैशिष्ट्यावगाहिताघटककाञ्चनमयत्वादिविषयतायामभावादिति भावः। ह्रदो वन्हिमानित्यादौ

वन्ह्यभावव्याप्यवद्ह्रदे लक्षणसमन्वयान्नासंभव इति ध्येयम् । व्यापकत्वं प्रतिबध्यताविशेषणमिति । तथा च सत्प्रतिपक्षनिश्चयीयप्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वमक्षतमेवेति भावः ।

नन्वत्र प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिवेशेनैव तादृशसत्प्रतिपक्षसंग्रहः - तथाहि - ह्रदत्वावच्छिन्नविशेष्यतानिरूपितकाञ्चनमयत्ववन्हित्वोभयधर्मावच्छिन्नप्रकारताया अपि ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नप्रकारतात्वेन, काञ्चनमयत्वह्रदत्वोभयधर्मावच्छिन्नविशेष्यताया अपि वन्हित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतात्वेन चोक्तप्रतिबध्यतावच्छेदकत्वात्कथमव्याप्तिरितिचेन्न । ह्रदोवन्हिमानित्यत्र वन्ह्यभावव्याप्यव्याप्यवद्ह्रदे सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः, ह्रदोवन्हि — वन्ह्यभावव्याप्यव्याप्याभावएतदुभयवानितिज्ञानीयवन्हित्वावच्छिन्नप्रकारताया अपि वन्ह्यभावव्याप्यव्याप्याभावत्वावच्छिन्नप्रकारतात्वेनावच्छेदकत्वात् तादृशप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः प्रकृतपक्षसाध्यवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतावच्छेदकीभूतवन्ह्यभावव्याप्यवद्ह्रदत्वावच्छिन्नविषयित्वावच्छिन्नजन्यतानिरूपितजनकतायाश्च वन्ह्यभावव्याप्यव्याप्यवान्ह्रदःइतिज्ञानेसत्वादिति अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वानुसरणम्, तन्निवेशे च ह्रदोवन्हिमानितिज्ञाने तादृशप्रतिबध्यताया असत्वान्नातिव्याप्तिरिति ध्येयम् ।

ननु प्रकृतानुमित्यवृत्तिविषयता इत्येवोच्यताम् किं सत्यन्तदलनिवेशेन, वन्ह्यभावव्याप्यव्याप्यवान् ह्रद इत्यस्यांऽनुमित्या सह समूहालंबनसंभवाद् वन्ह्यभाव व्याप्यव्याप्यवद्ह्रदेऽतिव्याप्तिविरहात् । न च वन्ह्यभावव्याप्यवान् ह्रद इत्यस्याप्रामाण्यज्ञानास्कन्दितस्याऽव्याप्यवृत्तित्वज्ञानास्कन्दितस्य वा अनुमित्या सह समूहालंबनसंभवादसंभवापत्तिरिति वाच्यम् । अप्रामाण्यज्ञानानास्कन्दिताऽव्याप्यवृतित्वज्ञानानास्कन्दितानुमित्यवृत्तिविषयितेत्येवं निवेशेन दोषाभावात् । न च केवलवन्ह्यभावव्याप्यव्याप्यवान् ह्रद इति ज्ञानीयविषयितायाः प्रकृतानुमित्यवृत्तित्वेनाऽतिव्याप्तिदुर्वारैवेति वाच्यम् । प्रकृतानुमितिवृत्तितानवच्छेदकं यद्रूपं तद्रूपावच्छिन्नत्वमित्येवं निवेशेन दोषाभावात् । वृत्तिता च स्वावच्छिन्ननिरूपकतानिरूपितविषयितावत्वसंबन्धेन । न च वन्ह्यभावव्याप्यव्याप्याभाववद्ह्रदपक्षकवन्हिसाध्यके वन्ह्यभावव्याप्यव्याप्यवद्ह्रदेऽतिव्याप्तिः, सिद्धान्तेतु विशिष्टपक्षग्रहत्वाव्यापकत्वस्य प्रतिबध्यतायां निवेशेनैव वारणादिति वाच्यम् । विशिष्टपक्षग्रहवृत्तित्वस्य विशिष्टसाध्यग्रहवृत्तित्वस्य विषयितायां निवेशेन दोषाभावात् । न च वन्ह्यभावव्याप्याभावव्याप्यवद्ह्रदपक्षकवन्हिसाध्यकसत्प्रतिपक्षेऽव्याप्तिः, निरुक्तविशिष्टपक्षग्रहवृत्तित्वस्य सत्प्रतिपक्ष[illegible]भावादिति

अत एवोक्तस्थले आश्रयासिध्याद्युन्नायके विशिष्टपक्षग्रहत्व-मात्रावच्छिन्नविरोधिन्यपि विशिष्टपक्षसाध्यवैशिष्ट्यविषयकानुमि-मितित्वव्यापकप्रतिबध्यताघटितविरोधिताशालिनि काञ्चनमयत्वा-भावव्याप्यविशिष्टह्रदादौ सत्यन्तदलस्य निरुक्तपक्षसाध्य-वैशिष्ट्यग्रहप्रतिबन्धकतावदनुमितिजनकतावच्छेदकविषयिताकत्वरूप विरोध्युन्नायकत्वस्य च सत्वेनातिप्रसंगः स्यादत उन्नेयेऽविरोध्यन्तविशेषणम्। एतच्च संगृह्यतेइत्यादिना स्वयमेव वक्ष्यते। उन्नेयतया प्रविष्टे विशिष्टविषयेऽ विरोधित्वविशेषणं यथाश्रुतलभ्यं, तदर्थः तादृशप्रतिबन्धकतावच्छेदकविषयिताकान्यत्वं तन्नि वेशेऽधिकविषयता निवेशाद् गौरवं, कांचनमयह्रदो वन्हिमानित्यादौ काञ्चनमयत्वाभाववद्ह्रदादिरूपाश्रयासिद्धिभे-दस्य सत्प्रतिपक्षदोषोन्नेये वन्ह्यभावविशिष्टह्रदादिरूपबाधेऽसत्वेनाऽ व्याप्तिश्चेति उन्नायकताघटकबाधविषयतायां विशिष्टपक्षादिग्रह प्रतिबन्धकतानवच्छेदकत्वनिवेशः।

वाच्यम्। विशिष्टपक्षग्रहाव्यवहितप्राक्क्षणज्ञानवृत्तित्वस्य निवेशे दोषाभावात्। वन्ह्यभावव्याप्यवान् ह्रद इत्यस्यप्रतिबध्यत्वेन पूर्वमुत्पत्तौ बाधकाभावात्। अत्रोच्यते—सिद्धान्ते व्यापकत्वादिप्रयुक्तगौरवस्य सत्वेऽपि अव्यवहित्वस्य क्षणा-देश्चातिगुरुतया लाघवाभावात्। किञ्च जलाभाववद्ध्रदपक्षक वन्हिसाध्यके जलव्यापकवन्ह्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षेऽ व्याप्तिः, निरुक्त-सत्प्रतिपक्षविषयकनिश्चयस्य पक्षतावच्छेदकविशिष्टग्रहाऽव्यवहितप्राक्क्षणे उत्पा-दयितुमशक्यत्वादिति।

अत एव। प्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वनिवेशादेव। उक्तस्थले। काञ्चनमयह्रदो वन्हिमानित्यनुमितौ। आश्रयासिध्याद्युन्नायके। अस्य काञ्चनमयत्वाभावव्याप्यह्रदादौ इत्यनेनाऽन्वयः। विशिष्टपक्षग्रहत्व मात्रावच्छिन्नविरोधिन्यपि। मात्रपदेन पक्षे साध्यवैशिष्ट्यग्रहत्वव्यावृत्तिः। आश्रयासिद्धिनिश्चयप्रतिबध्यतावच्छेदकत्वस्य स्वरूपसंबन्धंविशेषस्य तादृशवै-शिष्ट्यावगाहिसाध्यविषतायामभावेनाऽतिप्रसंगविरहेपीति यावत्। ग्रहत्वव्या-पकत्वपक्षेऽ तिव्याप्तिं योजयति। विशिष्टपक्षेत्यादि। विशेष्यदलं संगम-यति। निरुक्तेति। काञ्चमयह्रदेत्यर्थः। तादृशग्रहप्रतिबन्धकतावती या काञ्चनमयत्वाभावान् ह्रदः इत्याकारिकाऽ नुमितिः तज्जनकतावच्छेदकेत्यादि। उन्नेये। बाधादौ। अविरोध्यन्तं। विशिष्टपक्ष साध्यग्रहाविरोधिविशेषणम्।

उक्तस्थले बाधग्रहस्यापि अनुमितिरूपविशिष्टपक्षादिग्रहविरोधितयाऽव्याप्तितादवस्थ्यम् इति विशिष्टपक्षग्रहत्वव्यापकतानिवेशः। विशिष्टपक्षग्रहत्वपर्याप्तावच्छेदकताकत्वस्य प्रतिबध्यतायां निवेशे काञ्चनमयरजतमयह्रदोवन्हिमानित्यादौ आश्रयासिद्ध्युन्नायके काञ्चनमयत्वाभावव्याप्यवद्ह्रदादावतिव्याप्तिः, काञ्चनमयत्वघटितपक्षतावच्छेदकविशिष्टग्रहत्वस्य तद्ज्ञानप्रतिबध्यतानवच्छेदकत्वाद्तस्तदुपेक्ष्य तादृशग्रहत्वव्यापकतायास्तत्र निवेशः।

एतच्च—अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वसमर्थनं च। संगृह्यते इति। स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे त्वव्याप्तिः स्यादिति भावः। तथा च ऽविरोध्यन्तविशेषणमपि सार्थकं भवतीति तद्ग्रन्थाशयः। तन्निवेशे। प्रतिबन्धकतावच्छेदकविषयिताकान्यत्वनिवेशे। अधिकविषयतानिवेशादिति। पक्षे साध्यवैशिष्ट्यावगाहिग्रहविरोधीत्यनेनापि तादृशग्रहप्रतिबन्धकतावच्छेदकविषयिताकत्वस्य विवक्षणीयतया द्विधा विषयितानिवेशादिति भावः। फलमुखगौरवस्याऽदोषत्वे तु अव्याप्तिमप्याह। असत्त्वेनेति। तथा च विशिष्टपक्षग्रहप्रतिबन्धकतावच्छेदकविषयिताकान्यत्वविरहेणेति भावः। विशिष्टपक्षादिग्रहप्रतिबन्धकतानवच्छेदकत्वनिवेश इति। तथा च विशिष्टपक्षसाध्यग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदिका पक्षेसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदिका च या विषयिता तदवच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नविषयिता तद्रूपवत्त्वं विशेष्यदलार्थः। विशिष्टपक्षसाध्यग्रहत्वावच्छिन्नत्वं न स्वरूपसंबन्धविशेष इत्याह। उक्तस्थले इति। काञ्चनमयह्रदपक्षकवन्हिसाध्यकस्थले। बाधग्रहस्यापि काञ्चनमय ह्रदोवन्ह्यभाववानिति बाधग्रहस्यापि। अपिना आश्रयासिद्धिग्रहपरिग्रहः। अव्याप्तितादवस्थ्यमिति। बाधनिश्चयविषयतायां अनुमित्यात्मकविशिष्टपक्षग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वविरहादिति भावः। इति। अतः। विशिष्टपक्षग्रहत्वव्यापकतानिवेश इति। तथा च विशिष्टपक्षसाध्यग्रहाविरोधित्वस्य विशिष्टपक्षसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धतानवच्छेदकत्वमर्थः। बाधनिश्चयप्रतिबध्यताया विशिष्टपक्षसाध्यग्रहत्वाव्यापकत्वान्नाव्याप्तिः। विशिष्टपक्षग्रहत्वपर्याप्तावच्छेदकताकत्वस्य प्रतिबध्यतायां निवेशे नाव्याप्तिः, बाधनिश्चयप्रतिबध्यतायां साध्यविषयत्वस्याधिकस्य प्रवेशादित्यत आह। निवेशे इति। अतिव्याप्तिरिति। आश्रयासिद्धिनिश्चयप्रतिबध्यतावच्छेदकत्वस्य "स्वरूपसंबन्धविशेषस्य" तादृशवैशिष्ट्यावगाहित्वघटकरजतमयत्वविषयतायामसत्वा-

अथवा उन्नेयविशेषणमेवाऽविरोध्यन्तम्। यद्धर्मावच्छिन्न-प्रतिबध्यताघटितं विरोधित्वं सत्यन्तार्थः, तद्धर्मावच्छिन्नप्रतिबध्य-ताघटितविरोधिताया उन्नेयविशेषणतया विवक्षितत्वात्। पूर्वोक्त-स्थले च वन्ह्यभावव्याप्यव्याप्यविशिष्टह्रदात्मकाश्रयासिद्धेः विशिष्ट पक्षग्रहत्वावच्छिन्नविरोधित्वेन सत्यन्तदलाक्रान्तायास्तद्रूपावच्छिन्ना-विरोधिनः सत्प्रतिपक्षस्यैवोन्नायकत्वेन नातिव्याप्तिः। उन्नेय वाधस्य उन्नायकसत्प्रतिपक्षस्य च विशिष्टपक्षसाध्यवैशिष्ट्यग्रह त्वरूपैकधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविष-यिताकत्वेन सत्प्रतिपक्षे लक्षणसमन्वय इति। उन्नेयेऽ विरोध्यन्तम् विशेषणम् वन्हिव्याप्याभावसाध्यकेवन्हिव्याप्य-वत्पक्षात्मकवाधस्य विशिष्टपक्षादिग्रहाविरोधिवन्हिमत्पक्षोन्नायकस्य वारकमितिवक्ष्यते। तत्र यथाश्रुतं विरोध्युन्नायकत्वं प्रतिब-न्धकतावच्छेदकविषयिताविशिष्टविषयित्वावच्छिन्नानुमितिप्रयोजकत्वं, तत्र प्रतिबन्धकतावच्छेदकविषयतानिरूपकविषयितात्वेन निवेशनं शिरोवेष्टनेन नाशिकास्पर्शमनुकरोतीति प्रतिबन्धकता-वच्छेदकविषयित्वावच्छिन्नानुमितिप्रयोजकत्वं निवेशितम्। उक्त-स्थले वन्हिव्याप्यवत्पर्वतरूपवाधस्य वन्हिमत्पर्वतविषयकसमूहालंवन रूपवन्हिव्याप्यवत्पर्वतरूपविरोधिविषयकानुमितिप्रयोजकतयाऽतिप्र-संगः स्यादिति विरोधिविषयित्वावच्छिन्ननिरूपितप्रयोजकत्वं निवेशितम्।

प्रतिबन्धकतावच्छेदिका सती प्रकृतपक्षसाध्यकानुमितित्वव्यापकतादृशधर्मावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरू-पितजनकतावच्छेदिका तद्रूपावच्छिन्नत्वं सत्प्रतिपक्षत्वम्। पूर्वोक्तस्थले। वन्ह्य भावव्याप्यव्याप्याभाववद्ह्रदपक्षकवन्हिसाध्यकस्थले। तद्रूपावच्छिन्ना-विरोधिनः। विशिष्टपक्षग्रहाविरोधिनः। सत्प्रतिपक्षस्यैवेति। एवकारो भिन्नक्रमः, विशिष्टपक्षग्रहाविरोधिन एवेत्यर्थः। न तु तद्विरोधिन इतियावत्। नातिव्याप्तिरिति। यद्धर्मावच्छिन्नप्रतिबध्यताघटितविरोधित्वं उन्नायके, उन्नेये तद्धर्मावच्छिन्नप्रतिबध्यताघटितविरोधिताया अभावादिति परमार्थः। प्रकृते घटयति। उन्नेयवाधस्येति। विरोध्यन्तम्। पक्षे साध्यवैशिष्ट्याव-गाहिग्रहविरोध्यन्तमित्यर्थः। वारकमिति। तथा च वन्हिव्याप्याभावसाध्यक स्थले वन्हिव्याप्यवत्पर्वतरूपबाधेऽतिव्याप्तिवारणायेत्यर्थः। एवं चोन्नेये वन्हि-मत्पर्वते विशिष्टपक्षग्रहाविरोधित्वसत्वेऽपि पक्षेसाध्यग्रहविरोधित्वाभावान्न दोषः।

उन्नायकत्वं च यादृशविशिष्टविषयकत्वेन परामर्शस्यानुमितिजनकत्वं तत्वम् ।

अनुमितिजनकत्वरूपमुन्नायकत्वं न विषयस्येति अनुमितिजनकतावच्छेदकविषयिताकत्वरूपमनुमितिप्रयोजकत्वमेवात्र तदित्याह । उन्नायकत्वं चेति । यादृशविशिष्टविषयकत्वेनेति । तृतीयार्थोऽनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं, तन्निवेशाद्वन्हिव्याप्यवत्पर्वतरूपोक्तस्थलीयबाधे "उन्नायक" सत्प्रतिपक्षविषयकसमूहलंबन विषये नातिव्याप्तिः । स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे सत्प्रतिपक्षैकदेशे केवलपक्षादौ अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितसत्यन्तार्थाभावेनाऽतिव्याप्तिविरहेपि ह्रदोवन्हिमानित्यादौ वन्ह्यभाववन्ह्यभावव्याप्यव्याप्योभयविशिष्टह्रदादिविषयकज्ञानीयवन्ह्यभावविशिष्टह्रदादिविषयिताया अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तेर्वन्ह्यभावव्याप्यत्वावच्छिन्नविषयितानिरूपितह्रदत्वावच्छिन्नविषयितात्वेन विरोध्युन्नायकतावच्छेदकतया वन्ह्यभावविशिष्टह्रदादावतिव्याप्तेर्दुर्वारतया. उन्नायकताशरीरेऽनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं निवेशनीयम् ।

वक्ष्यते इति । विरोध्यन्तेन वन्हिव्याप्याभवे साध्ये वन्हिव्याप्यात्मकपक्षस्य व्युदास इति ग्रन्थेनेति शेषः । उक्तस्थले । वन्हिव्याप्याभावसाध्यकस्थले । प्रयोजकतयेति । वन्हिमान्पर्वतोवन्हिव्याप्यवानितिसमूहालंबनानुमितिप्रयोजकतयेत्यर्थः । निवेशितमिति । तथा च पक्षसाध्यवैशिष्ट्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतावदनुमितिप्रयोजकत्वमित्यर्थः । अनतिरिक्तवृत्तित्वरूपमिति । तथा च यद्रूपावच्छिन्नविषयिताव्यापिका तादृशानुमिति जनकता तद्रूपवत्वम् । तन्निवेशात् । अनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेशात् नातिव्याप्तिरिति । वन्हिव्याप्याभावानुमितिविरोधिवन्हिव्याप्यवत्पर्वतरूपोन्नायकत्वस्य वन्हिव्याप्यवान् पर्वतोवन्हिव्याप्यव्याप्यवानितिज्ञानविषये "बाधे" सत्वेपि नातिव्याप्तिरिति भावः । तादृशजनकतायां बाधविषयिताव्यापकत्वविरहादिति ध्येयम् । स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे इति । एवं च यद्रूपावच्छिन्नविषयिता तादृशानुमितिजनकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावतीत्यर्थोबोध्यः । केवलपक्षादौ । केवलह्रदादौ । स्वरूपसंबन्धरूपावच्छेदकताघटितविशेष्यदलसत्वेपीत्यादिः । सत्यन्तार्थाभावेनेति । ह्रदत्वावच्छिन्नविषयितायाः पक्षसाध्यग्रहप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावादिति भावः । अनु-

अत्र ईदृशावच्छेदकत्वनिवेशेपि सत्यन्तविरोधित्वशरीरेपि ईदृशावच्छेदकत्वं प्रवेश्यं, न तु स्वरूपसंबन्धरूपं, तथा सति उक्तस्थले वन्ह्यभावव्याप्यव्याप्यविशिष्टह्लदादावतिव्याप्तिः, तादृशविशिष्टविषयिताया वन्ह्यभावविशिष्टह्लदादिविषयित्वाभिन्नतया वन्ह्यभावत्वावच्छिन्नविषयतानिरूपितह्लदत्वावच्छिन्नविषयितात्वेन पक्षे साध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकत्वात् ।

मितिप्रतिबन्धकताऽनतिरिक्तवृत्तेरिति । अनेन सत्यन्तार्थसत्वं सूचितम् । विरोध्युन्नायकतावच्छेदकतयेति । अनेन विशेष्यदलसत्वं सूचितम् । अत्र । उन्नायकताशरीरे । ईदृशावच्छेदकतानिवेशेपि । अनतिरिक्तवृत्तित्वरूपावच्छेदकतानिवेशेपि । ईदृशावच्छेदकत्वं प्रवेश्यमिति । अनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं प्रवेश्यमित्यर्थः । तथासति । स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे । उक्तस्थले । ह्लदोवन्हिमानित्यत्र । तादृशविशिष्टविषयितायाः । वन्ह्यभावव्याप्यव्याप्यविशिष्टह्लदविषयितायाः । प्रतिबन्धकतावच्छेदकत्वात् । प्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावत्वात् । अनेन सत्यन्तदलसत्वं सूचितम् । इदमुपलक्षणम् विशिष्टपक्षग्रहत्वाव्यापकपक्षसाध्यवैशिष्ट्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्ना या वन्ह्यभावव्याप्यवान्ह्लदइत्यनुमितिनिष्ठा जन्यता तन्निरूपितजनकतावच्छेदकत्वाच्चेत्यपि बोध्यम् । इदंतुबोध्यम् । अथ अनरिक्तवृत्तित्वनिवेशे अनतिरिक्तवृत्तित्वार्थश्च "सामान्यलक्षणोक्तदोषात्" प्रतिबन्धकतानिष्ठतादृशरूपावच्छिन्नविषयिताव्यापकत्वंपर्यवसन्नोभवति । एवं जनकतादिश्यपि । तथा च विषयिताया द्विधानिवेशस्यावश्यकत्वे किं लाघवमितिचिन्त्यम् ।

पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षग्रहत्वाव्यापिका विशिष्टसाध्यग्रहत्वाव्यापिका अथ च पक्षे साध्यवैशिष्ट्यग्रहत्वव्यापिका या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतानिरूपितजनकत्वावच्छेदिका यद्रूपावच्छिन्नविषयिता तद्रूपवत्वं लक्षणम् ।

ननु ह्लदो वन्हिमान् जलादित्यादौ वन्हिव्यापकाभावप्रतियोगिजलवद्ह्लदेमतभेदेनाऽसाधारणविरोधरूपेऽतिव्याप्तिः, वन्हिव्यापकाभावप्रतियोगिजलवद्ह्लदत्वावच्छिन्नविषयितायाः पक्षे साध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकत्वात्, विशिष्टपक्षग्रहत्वाव्यापिका विशिष्टसाध्यग्रहत्वाव्यापिका अथ च पक्षे साध्यवैशिष्ट्यावगाहिग्रहत्वव्यापिका या प्रतिब-

तच्च साध्यव्याप्यवत्पक्षादिकम्। असाधारणविरोधयोरन्यतरस्य प्रतिपक्षविधया दोषत्वपक्षे प्रकृतसाधने प्रकृतसाध्यव्यापकाभावप्रतियोगित्वाद्यनवगाही परामर्शोग्राह्यः।

तच्चेति। तादृशविशिष्टंचेत्यर्थः। साध्यव्यापकाभावप्रतियोगिप्रकृतहेतुमत्पक्षादौ मतभेदेन विरोधाऽसाधारण्यरूपेऽ तिव्याप्तिं वारयति। असाधारणेति। प्रतिपक्षविधया। अनुमितिप्रतिबन्धकसाध्याभावव्याप्यवत्ताज्ञानविधयेत्यर्थः। सपक्षव्यावृत्तत्वमसाधारण्यं, साध्यासामानाधिकरण्यं विरोधः इतिमतेऽनुमित्यविरोधिनि तत्र नोक्तलक्षणातिव्याप्तिरतः दोषत्वपक्षे इत्युक्तम्। प्रतियोगित्वादीत्यादिना पक्षधर्मतापरिग्रहः।

तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षे प्रकृतसाध्यतावच्छेदक विशिष्टव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतसाधनतावच्छेदकावच्छिन्नवैशिष्ट्यानवगाहिपरामर्शनिष्ठानुमितिजनकतावच्छेदकविषयिताकत्वरूपमुन्नायकत्वं विवक्षणीयमित्यर्थः।

ध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकीभूतवन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयित्वावच्छिन्नजन्यतानिरूपितव्यतिरेकव्याप्तिज्ञानविधया,जनकतावच्छेदकत्वाच्चेत्यत आह!
अतिव्याप्तिंवारयतीति। तथा च तादृशजन्यतानिरूपिता या प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकविशिष्टव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारत्वानवच्छिन्ना (परामर्शनिष्ठा) जनकता तादृशजनकतानतिरिक्तवृत्ति यद्रूपावच्छिन्नविषयिता तद्रूपवत्वम्।

ननु प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षे प्रकृतसाध्यतावच्छेदकविशिष्टव्यापकाभावप्रतियोगित्वविशिष्टहेतुवैशिष्ट्यानवगाहित्वमेव निवेश्यतां किं हेतुतावच्छेदकावच्छिन्नत्वनिवेशनेत्यत आह। रूपान्तरेणेति। द्रव्यत्वादिनेत्यर्थः।
यत्र। स्थलविशेषे। व्यतिरेकिप्रतिहेतुवा। वन्हिव्यापकीभूताभावप्रतियोगिद्रव्यवद्ह्रदकालीनजलादेःप्रतिहेतुता। तत्स्थलीयसत्प्रतिपक्षस्य। वन्ह्यभावव्याप्यवन्हिव्यापकाभावप्रतियोगिद्रव्यवद्ह्रदकालीनजलवद्ह्रदस्य। संग्रहाय। अव्याप्तिवारणाय। प्रकृतसाधनतावच्छेदकनिवेश इति।
प्रकृतपरामर्शस्य प्रकृतसाध्यतावच्छेदकविशिष्टव्यापकाभावप्रतियोगित्वविशिष्टहेतुवैशिष्ट्यावगाहित्वेपि हेतुत्वावच्छेदकविशिष्टवैशिष्ट्यानवगाहित्वान्नाव्याप्तिरिति भावः। प्रकृतसाध्यतावच्छेदकानिवेशे साध्यव्यापकाभावप्रतियोगित्वविशि-
[illegible]प्रतियोगित्व[illegible]जलवद्ह्रदकालीनवन्हि-
ष्टेत्यादिनिवेशे ह्रदस्तजो[illegible]व्यापकीभूता[illegible]

रूपान्तरेण प्रकृतहेतोर्व्यतिरेकिप्रतिहेतुता तत्स्थलीय-प्रतिपक्षस्य संग्रहाय प्रकृतसाधनतावच्छेदक-निवेशः। रूपान्तरावच्छिन्नसाध्यव्यापकीभूताभावप्रतियोगित्व-विशिष्टप्रकृतहेतुमत्कालीनत्वस्य यत्रप्रकृतसाध्यतावच्छेदक-घटकत्वं तत्स्थलीयतादृशसाध्यतावच्छेदकविशिष्टसाध्याभावव्याप्य-वत्पक्षात्मकप्रतिपक्षसंग्रहाय प्रकृतसाध्यतावच्छेदकनिवेशः। यत्र प्रकृतसाध्यव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतसाधनवत्त्वेन रूपा-न्तरावच्छिन्नपक्षस्य प्रकृतपक्षतावच्छेदके प्रवेशस्तत्र सत्प्रतिपक्षस्य-तादृशपक्षतावच्छेदकविशिष्टे साध्याभावव्याप्यवत्तारूपस्य संग्रहाय प्रकृतपक्षतावच्छेदकनिवेशः।

मान् इत्यत्र तेजोव्यापकीभूताभावप्रतियोगिजलवद्ह्रदकालीनवन्ह्यभावव्याप्यवद् ह्रदरूपसत्प्रतिपक्षेऽव्याप्तिः, विरोध्यनुमितिजनकीभूतपरामर्शे तेजोव्यापका-भावप्रतियोगिजलवद्ह्रदकालीनवन्ह्यभावव्याप्यवान् ह्रद इत्याकारके साध्य-व्यापकाभावप्रतियोगिहेतुवैशिष्ट्यावगाहित्वस्यैव सत्वादतः प्रकृतसाध्यतावच्छेदक-निवेशः। निवेशे तु प्रकृतसाध्यतावच्छेदकीभूतवन्हित्ववैशिष्ट्यविरहान्नाव्याप्तिरि-त्याह। रूपान्तरावच्छिन्नेति। तेजस्त्वावच्छिन्नेत्यर्थः। प्रकृतपक्षतावच्छे-दकनिवेशस्य फलमाह। यत्रेति। प्रकृतसाध्यव्यापकीभूताभावप्रतियो-गित्वविशिष्टप्रकृतसाधनवत्वेनेति। वन्हिव्यापकीभूताभावप्रतियोगिजल-वत्वेनेत्यर्थः। रूपान्तरावच्छिन्नपक्षस्य। द्रव्यत्वावच्छिन्नह्रदस्य। पक्षतावच्छेदके प्रवेश इति। वन्हिव्यापकाभावप्रतियोगिजलवद्द्रव्यकालीन-ह्रदोवन्हिमानिति भावः। तत्रत्यसत्प्रतिपक्षस्य। वन्ह्यभावव्याप्यवत्ता-दृशह्रदरूपसत्प्रतिपक्षस्येति यावत्। संग्रहायेति। उक्तसत्प्रतिपक्षेऽ व्याप्तिवारणायेति यावत्। प्रकृतपक्षतावच्छेदकप्रवेश इति-अन्यथा वन्हिव्यापकाभावप्रतियोगिजलवद्द्रव्यकालीनह्रदोवन्हिमान्जलादित्यत्र वन्ह्यभावव्याप्यजलवद्वन्हिव्यापकाभावप्रतियोगिजलवद्द्रव्यकालीनह्रदरूपसत्प्रति-पक्षेऽव्याप्तिः विरोध्यनुमितिजनके वन्ह्यभावव्याप्य-वान् वन्हिव्यापकाभावप्रतियोगिजलवद्द्रव्यकालीनह्रदः इत्याकारकपरामर्शे पक्षीभूतह्रदे (द्रव्ये) साध्यतावच्छेदकीभूतवन्हित्वविशिष्टव्यापकाभावप्रतियोगि-हेतुवैशिष्ट्यावगाहित्वसत्वादतः पक्षतावच्छेदकनिवेशः। तथा च सति पक्षता-वच्छेदकीभूतह्रदत्वावच्छिन्ने तादृशहेतुवैशिष्ट्यानवगाहित्वसत्त्वान्नाव्याप्तिरिति भावः। प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षेऽतिव्याप्तिः, तद्विषयकज्ञानस्य पक्षे साध्यव्यापकाभावप्रतियोगिहेतुवैशिष्ट्यानवगाहित्वात्,

साध्याभावनिरूपितान्वयव्याप्तिविशिष्टप्रकृतहेतुमत्पक्षस्यापि लक्ष्यत्वोपगमान्न तत्रातिव्याप्तिः। तस्याऽसाधारण्यमात्रात्मकत्वे तदनवगाहित्वमपि परामर्शविशेषणं देयम्। तत्संग्राहकमप्यादिपदम्।

प्रकृतानुमितिविरोधित्वात्, विरोध्यनुमितिजनकत्वाच्चेत्याशंकामिष्टापत्तिपरतया समाधत्ते। साध्याभावनिरूपिताऽन्वयव्याप्तिविशिष्टस्येति। अयं भावः सत्प्रतिपक्षश्च साध्याभावव्याप्यहेतुमत्पक्षरूपः। साध्याभावव्याप्तिश्च साध्याभावाभाववदवृत्तित्वरूपा प्रतिहेतुव्यापकसाध्याभावसामानाधिकरण्यरूपा च। तत्र साध्याभावाभाववदवृत्तिमत्पक्षात्मकसत्प्रतिपक्षनिश्चयस्य "साध्याभावाभाववदवृत्तिमान्पक्षः" इत्याकारकस्य ज्ञानवैशिष्ट्यानवच्छिन्नमेव प्रतिबन्धकत्वम्। प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षात्मकसत्प्रतिपक्षनिश्चयस्य च ज्ञानवैशिष्ट्यावच्छिन्नमेव प्रतिबन्धकत्वम्, प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमान्पक्ष इति निश्चयस्येव हेतुव्यापकः साध्याभावः "हेतुमान् साध्याभाववान्" इति निश्चयविशिष्टस्य प्रतिहेतुमान् पक्ष इति निश्चयस्यापि प्रतिबन्धकत्वादिति। तत्र। साध्याभावनिरूपितान्वयव्याप्तिविशिष्टप्रकृतहेतुमत्पक्षे। सत्प्रतिपक्षज्ञानस्य विरोधिविषयकनिश्चयत्वेनैव प्रतिबन्धकत्वं, विरोध्यनुमितिसामग्रीत्वेन प्रतिबन्धकतायाः दीधितिकृता निराकृतत्त्वात्, विरोधित्वं च तत्तदभावयोरिव तत्तदभावव्याप्ययोरपि अनुभवसिद्धं, तत्र व्यापकसामानाधिकरण्यरूपव्याप्तिघटितविशिष्टज्ञानस्य प्रतिबन्धकतायां न सामानाधिकरण्यादिविषयकत्वं तन्त्रं, तदविषयकस्यापि हेतुमान् साध्याभाववान्इति ज्ञानस्य हेतुमान्पक्ष इति ज्ञानसहितस्य प्रतिबन्धकत्वात्। यद्विषयकत्वस्य हि प्रतिबन्धकताप्रयोजकत्वं तद्घटितविशिष्टस्यैव दोषत्वम्। प्रतिबन्धकत्वाप्रयोजकसामानाधिकरण्यघटितविशिष्टस्य यदि सत्प्रतिपक्षता स्यात्तदा कालीनत्वाद्यनन्तपदार्थघटितस्यापि तत्वं स्यात् इत्याशयेनाह। तस्येति। प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्षस्येत्यर्थः। असाधारण्यात्मकत्वे। सत्प्रतिपक्षानात्मकत्वे। तदनवगाहित्वमपीति। पक्षेप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुवैशिष्ट्यानवगाहित्वमपीत्यर्थः। परामर्शविशेषणं देयमिति। विरोध्यनुमितिजनकपरामर्शे विशेषणं देयमित्यर्थः। तत्संग्राहकमपीति। प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्षसंग्राहकमपीत्यर्थः। आदिपदम्। प्रकृतसाध्यव्यापकाभावप्रतियोगित्वाद्यनवगाहीत्यत्रादिपदम्।

अथ असाधारण्यातिव्याप्तेरवश्यं निवेशनीयविशिष्टद्वयाघटितत्वनिवेशनेनैव तद्वारणसंभवात्, प्रकृतसाधनेप्रकृतसाध्यव्यापकाभावप्रतियोगित्वाद्यनवगाहित्वनिवेशनं व्यर्थम्।

अत्र च सत्यन्तेन सत्प्रतिपक्षोन्नायकस्य, अविरोध्यन्तेनाऽऽश्रयासिद्ध्युन्नायकस्य विरोध्यन्तेन वन्हिव्याप्याभावे साध्ये वन्हिव्याप्यवत्पक्षात्मकस्य बाधस्य व्युदासः। संगृह्यते चानेन काञ्चनमयवन्हिमानित्यादौ वन्ह्याद्यभावव्याप्यह्रदत्वादिमान् पक्ष इति। सत्प्रतिपक्षे च यथासिद्धान्तं पञ्चावयवादिप्रयोगमिच्छन्ति। अयं हेतुः साध्यव्यभिचारवानित्यादिवदयं पक्षः साध्याभावव्याप्यवानित्यादिकं उद्भावनं पुनरुचितं प्रतिभाति।

इतिदीधितौसत्प्रतिपक्षग्रन्थः

सत्प्रतिपक्षोन्नायकस्येति। साध्याभावव्याप्यव्याप्यवत्पक्षादेरविरोधितयाऽनाभासरूपस्येत्यर्थः। आश्रयासिद्ध्याद्युन्नायकस्येति। आश्रयासिद्ध्यन्तर्गतस्य पक्षविशेषणाद्यभावव्याप्यवत्पक्षादेरित्यर्थः। आश्रयासिद्ध्यादीत्यादिपदात्साध्याप्रसिद्धिपरिग्रहः। वन्ह्यादिसाध्यके बाधस्य किंचिदनुन्नायकतया उन्नेये विरोध्यन्तविशेषणस्य तद्वारकता न संभवतीतिबाधविशेषे तद्व्यावृत्तिं दर्शयति। विरोध्यन्तेनेति। वन्हिव्याप्यवत्पक्षात्मकस्येत्यनेन वन्हिमत्पक्षोन्नायकत्वं सूचितम्। अविरोध्यन्तसार्थक्याय प्रतिबध्यतायां स्वरूपसंबन्धरूपसाध्यवैशिष्ट्यावगाहित्वावच्छिन्नत्वनिवेशासंभवं दर्शयति। संगृह्यते इति। अनेन। लक्षणेन। प्रतिस्थापनात्मकन्यायप्रयोगानौचित्यं दर्शयिष्यन् तत्रैव सांप्रदायिकतामाह। सत्प्रतिपक्षे चेति। यथासिद्धान्तमिति। नैयायिकादिप्रतिवादिनामित्यादिः। स्वसिद्धान्तानुसारेणेत्यर्थः। पञ्चावयवादीति। ह्रदो न वन्हिमान् ह्रदत्वादित्यादिरूपेत्यादिः। आदिना मीमांसकसौगतसिद्धत्र्यवयव-द्व्यवयव-

न च विशिष्टद्वयाघटितत्वनिवेशस्य का आवश्यकतेतिवाच्यम्। वन्ह्यभाववद्वन्ह्यभावव्याप्यव्याप्यवद्वृत्तिवन्ह्यभावव्याप्यव्याप्यवद्ह्रदादावतिव्याप्तिवारणार्थमेव तस्यावश्यकत्वात्।

न चैवं सत्प्रतिपक्षे ऽव्याप्तिः, तस्य विशिष्टद्वयघटितत्वादिति वाच्यम्। विशिष्टद्वयाघटितत्वप्रविष्टविशिष्टद्वयविषयितायां सत्प्रतिपक्षघटकविशिष्टद्वयविषयिताभेदस्यागत्या निवेशनीयत्वादिति चेदत्राहुः—यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं तादृशजनकतानतिरिक्तवृत्तित्वे सति तादृशप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वमेव विशिष्टद्वयाघटितत्वपदेन विवक्षणीयम्। अन्यथा जनकतानतिरिक्तवृत्तित्वमनिवेश्य केवल-

न्यायपरिग्रहः। इच्छन्तीति। नैयायिकसांप्रदायिका इतिशेषः। उचितंप्रतिभातीति। वादिना न्याये प्रयुक्ते हेतुदोषमात्रस्यैवाऽऽकांक्षितत्वात्प्रथमतस्तमनुद्भाव्यविपरीतप्रतिज्ञादिप्रयोगेऽर्थान्तरस्यदुर्वारत्वादितिभावः।

इतिश्रीमहामहोपाध्यायगदाधरभट्टाचार्यविरचितः
सत्प्रतिपक्षग्रन्थः—

प्रतिबन्धकतानतिरिक्तवृत्तित्वघटनविशिष्टद्वयाघटितत्वनिवेशे जलवान्वन्ह्यभाववान्जलवांश्चह्रदःइत्यादिज्ञानीयनानाविधविषयतानां प्रतियोगिकोटौ निवेशेन गौरवम्, अन्वयव्यतिरेकव्याप्तिघटितसत्प्रतिपक्षसाधारणासाधारण्यावृत्तसत्प्रतिपक्षत्वस्यदुर्वचतयासत्प्रतिपक्षविषयतावहिर्भूतत्वनिवेशायोगात्। तस्य सुवचत्वेतु-तस्यैव लक्षणत्वे एतत्प्रयासस्यवैफल्यात्। स्वमते तु सत्प्रतिपक्षघटकविशिष्टद्वयविषयकनिश्चयत्वस्य जनकतातिरिक्तवृत्तित्वादेव न दोषः। एवं च असाधारणवारणाय तादृशप्रतियोगित्वाद्यनवगाहित्वनिवेशनमावश्यकम्। यादृशविशिष्टपदेन सत्प्रतिपक्षात्मकविशिष्टमादाय दोषस्तु अस्मद्गुरुचरणकृतसामान्यनिरुक्तिगंगाटीकायां द्रष्टव्यः इति ध्येयम्।

दीधितौ-संगृह्यतेचेति। एतत्तत्वमुक्तं प्राक्। केचित्तु ननु प्रकृतसाध्याभावव्याप्यवत्प्रकृतपक्ष एवास्तु सत्प्रतिपक्षः साध्यवत्तावुद्धौ नव्यमते तस्यैव विरोधित्वात्, तथा च पक्षनिष्ठसाध्याभावव्याप्यादेरनुगमार्थं विरोधिरूपोन्नायकत्वघटितलक्षणं व्यर्थमत आह। संगृह्यतेचेति। अन्यथा प्रकृतसाध्याप्रसिद्धया तत्रत्यसत्प्रतिपक्षसंग्रहोन स्यादिति प्राहुः। मीमांसकैः प्रतिज्ञादित्रयस्य, बौद्धैरुदाहरणादिद्वयस्य, प्राच्यैः वाक्यदशकस्यन्यायत्वोपगमात्।

इतिपं॰श्रीज्वालाप्रसादगौड़विरचिता सत्प्रतिपक्षविलासिनीसमाप्ता।

— शुभंभूयात —